तत्त्वे विप्रतिपन्नानां, वाक्यानामितरेतरम्
विरोधपरिहारोऽत्र, निर्णयस्तत्त्वदर्शनम् ॥

इति । तत्र व्रतस्य रूपं स्कन्द-मार्कण्डेय-भविष्योत्तरेषु दर्शितम् ।

CLOSING : इत्याद्यष्टम्यामर्द्धरात्रे यज्ञकर्म कृत्वा महिषघातनं कृत्वा नवम्यां बलिं दत्वा दशम्यां प्रेषयेदिति । तद्यजेः पूजार्थत्वेन यज्ञशब्दस्य पूजनार्थत्वेन व्याख्येयम् । पूर्व-विशेषवाक्यविरोधात् । वाक्यान्तरेपि अष्टम्यां पूजा च विहिता । काले कर्म समारब्ध-मकाले च समाप्यत । इति ।

COLOPHON : इति **श्रीगोविन्दार्णवे** आश्विननवमी-निर्णयः ।

श्रीरस्तु । शुभं भवतु ।

अक्षरमात्रपदस्वरहीनं व्यंजनसन्धिविवर्जितरेफम् ।
साधुभिरेव सम क्षमितव्यं कोऽत्र न मुह्यति शास्त्रसमूहे ॥ १ ॥

श्री । श्री । श्री । श्री । श्री । श्री । श्री ।

## 232. निर्णयोद्धार-विशेष-तिथिनिर्णयः

OPENING: श्रीगणेशाय नमः । श्रीगुरुभ्यो नमः ।

**स्मृत्यर्थ(र्थ)सार(रं)हेमाद्रिं माधवं निर्णयामृतम्** ।
वीक्ष्य **निर्णयसिन्धुं** च **स्मृतिदर्पण**मादरात् ॥ १ ॥
**निर्णयोदन्वतः** सारं मुक्तोद्धारं करोम्यहम् ।
**राघवो** विदुषां प्रीत्यै **निर्णयोद्धार**नामकम् ॥ २ ॥

CLOSING : फाल्गुन कृष्णप्रतिपदि श्वपचत्व स्पृष्ट्वा स्नायादिति निर्णयसिन्धुः, तद्दिने प्रात र्होलाकाभूमिं विभूतिं च वंदयेत् । तथा चूतकुसुमप्राशनं कुर्यात् । इति **फाल्गुनः** । **अथ चैत्रकृष्णाष्टम्यां** जानक्या उत्पत्तिः ।

COLOPHON : इति श्रीराघवभट्टकृते निर्णयोद्धारविशेषतिथिनिर्णयः सम्पूर्णः ।

यादृशं पुस्तकं दृष्टं तादृशं लिखितं मया ।
यदि शुद्धमशुद्धं वा मम दोषो न विद्यत(ते) ॥ १ ॥

शुभं भवतु । श्री । श्री । श्री

## 241. भट्टोजी-दीक्षितानां पद्यानि

OPENING: श्रीगणेशाय नमः ।

भौमेऽर्के भृगुजे महाग्रहनिशा सप्तम्यनङ्गाह्वया ,
नन्दा जन्मदिनेषु सन्धियुगले नो तर्पणं स्यात्तिलैः ।
नोद्वाहव्रतचौलवृद्धिषु समार्द्धार्द्धकमासक्रमान् ,
नो दुष्येत्तु मतौ महालयगयापुण्याहतीर्थादिषु ॥ १ ॥

CLOSING : वेदीमार्जनसेकबर्हिरथ शुंधंती च पिण्डां जना-
म्याङ्क्षौ वास उपस्थिते स्मयजुषा कर्ज परेतश्रुतिः ।
कृत्वा प्रोक्षितगोत्रवृद्धिकथनं स्वस्त्यक्षणं दक्षिणा ,
घोराशिर्ग्रहपात्रचालनविसर्गामावरा अद्य मे ॥ १४ ॥

COLOPHON : इति भट्टोजिदीक्षितानां पद्यानि ।

Post-Colophonic : संवत् १८६२ ना अशाढ वद १० रवे उ लिखितंग दवे श्री ५ डोशा सुत पुरूषोत्तांम ॥

## 246. रुद्रसूत्रम्

OPENING : श्रीगणेशाय नमः ।

अथ पराशरबौधायनादिप्रोक्त [वि] धिना जपेत् शिवसंकल्पं पुरुषसूक्तं उत्तारनारायणं अप्रतिरथं विभ्राडिति पञ्चांगमन्त्रान् जपित्वा षडङ्गमन्त्रानित्येके तिसृणां महाव्याहृतीनां रुद्रस्य चादाविति ।

CLOSING : जपान्त इमा रुद्रायेति जपं निवेद्य द्राप इत्यष्टाङ्गं प्रणम्य विकिरिद्रे ति विसृज्य शिवरूपो विहरेच्छिवरूपो विहरेत् ।

COLOPHON : इति रुद्रसूत्रे प्रथमोध्याये ।

श्री । पञ्चदिनपक्षमाह । प्र० ।११। द्वि० २२ तृ० ३३ । च० ४४ । पं० ११ । अनन्तरहोम । ऋत्विक् ११।११।२२।३३।४४।११।१२१।

Post-Colophonic : संवत् १९१८ अशाड वदि २ भोमे । लि० दवे लिलाधरसुत रेवाशंकरेण स्वार्थे ।

## 254. शिक्षापत्री सार्थ

W-OPENING : श्रीकृष्णाय नमो नमः ।

अथ शिक्षापत्री लिख्यते । श्लोकः—

वामे यस्य स्थिता राधा श्रीश्च यस्यास्ति वक्षसि ।
वृन्दावनविहारं तं श्रीकृष्णं हृदि चिन्तये ॥ १ ॥
लिखामि **सहजानन्दः** स्वामी सर्वान्निजाश्रितान् ।
नानादेशस्थितान् **शिक्षापत्रीं** **वृत्तालयस्थितः** ॥ २ ॥

W-CLOSING : शिक्षापत्र्याः प्रतिदिनं पाठो स्याम उपाश्रितैः ।
कर्त्तव्योऽनक्षरज्ञैस्तु श्रवणं कार्यमादिशत् ॥ २०७ ॥
चक्रभावे तु पूजैव कार्याऽस्याः प्रतिवासरम् ।
मद्रूपमिति मद्वाणी मान्येयं परमादरात् ॥ २०९ ॥
युक्ताय सम्पदा दैव्या दातव्येयं तु पत्रिका ।
आसुर्या सम्पदाढचाय पुंसे देया न कर्हिचित् ॥ २१० ॥
विक्रमार्कशकस्याब्दे नेत्राष्टवसुभूमिते ।
वसन्ताद्यदिने शिक्षापत्रीयं लिखिता शुभा ॥ २११ ॥

निजाश्रितानां सकलार्त्तिहन्ता सद्धर्मभक्तेरवनं विधाता ।
दाता सुखानां मनसेप्सितानां तनोतु कृष्णोऽखिलमङ्गलं नः ।। २१२ ।।

W-COLOPHON : इति श्रीसहजानन्दस्वामिलिखिता शिक्षापत्री समाप्ता ।

Ct.-OPENING : श्रीसहजानन्द स्वामि जे ते पोताना सत्संगि प्रत्ये शिक्षापत्री ने लिखिता थका प्रथम पोताना ईष्टदेव जे श्रीकृष्ण भगवांन तेनुं ध्यानरूप मंगलाचरण करे छे ।

Ct.-CLOSING : अने पोताना आश्रित जे भक्तजन तेमनी जे समग्र पीडा तेना नाश करनारा एवाने धर्मे सहित जेनि रक्षाना करनारा एवाने पोताना भक्तजन न मनवंछित सुख ना आपनारा एवा जे श्रीकृष्ण भगवांन ते जेते अमारा समग्र मंगल ने विस्तारो ।। २१२ ।।

Ct.-COLOPHON : इति श्रीसहजानन्दस्वामिशिष्य-नित्यानन्दमुनिलिखिता शिक्षापत्रीटीका समाप्ता ।

## 255. शौचदशक-भाष्यम्

OPENING : श्रीमहागणपतये नमः ।

**विज्ञानेश्वर**विरचित-मुनिजनवाक्यै**र्मिताक्षरा**मध्यात् ।
**आशौचदशकवृत्तं** वदति हरिर्हरिहरौ नत्वा ।। १ ।।

अत्र तावत् श्रीविज्ञानेश्वरयोगीन्द्रश्चतुर्वर्णलोकस्य सूतकशावविशुद्धयर्थं वृत्त-दशकं शार्दूलविक्रीडितेन चकार जन्मनि सूतिभवं सूतकं, मरणे शवभवं शावं । तत्राद्यवृत्तम्—

मातुर्गर्भविपरस्वधं त्रिदिवसं मासत्रयेऽतो यथा ,
मासाहं त्रिषु सूतकावधिरतः स्नानं पितुः सर्वदा ।
ज्ञातीनां पतनादिजातमरणे पित्रोर्दशाहं सदा ,
नाम्नः प्राक् तदपैति सूतकवशाद् भानुर्दशाहं परम् ।।१।।

CLOSING : अत्र प्रसूयते न शूद्रस्य नाधिकारो न विप्रतिषेधः, त्रिंशदहोरात्राणीत्येके इति प्रचेताः इव नु पूर्वकल्पे आशाशुक्षुं इति, अस्मिन् द्रवतीति शूद्रः स तस्य तत् सूतकशा-बेस्तः एकत्रिंशद्दिनामनुकल्पः । तत्र संरुराणां कल्प एव ज्यायान् नाशौचं तेषां यतः प्रतिलोमा धर्महीना इति स्मृत्यन्तरम् । तेषां केवलं प्रसूतौ मृतौ वा मलापकर्षणाय स्नानं, न शूद्रस्य प्रथमकल्पोऽङ्गीकृत इति । शूद्रो धन्यः कलिर्धन्यः इति व्यासवाक्यात् शूद्रधर्मसंकराणामादृतः । धन्यः शब्दो मङ्गलवाचक इति ।

COLOPHON : इति शौचदशकभाष्यं श्रीहरिहरविरचितं सम्पूर्णः । शुभं भवतुः । कल्याणमस्तुः । श्रीरस्तुः ।

## 256. श्राद्धकल्पः

OPENING : श्रीगणेशाय नमः ।

अथ त्रिकण्डिकासूत्र लिख्यते—

अथातो नित्यस्नान नद्यादौ मृद्गोमयकुशतिलसुमनस आहृत्योदकान्तं गत्वा

शुचौ देशे स्थाप्य प्रक्षाल्य पाणिपादं कुशोपग्रहो बद्धशिखी यज्ञोपवीत्याचम्योरुंहीति तोयमामन्त्र्यावर्त्तयेद्येते शतमिति ।

CLOSING : अथ काम्यानि भवन्ति स्त्रियोऽप्रतिरूपाः प्रतिपदि द्वितीयायां स्यात् स्त्रीजन्म । अश्वास्तृतीयायां । चतुर्थ्यां क्षुद्रपशवः । पुत्राः पञ्चम्यां द्यूतर्द्धिः । षष्ठयां कृषिः सप्तम्यां अष्टम्यां वाणिज्य । मेकशफं नवम्यां । दशम्यां गावः परिचारका एकादश्यां धनधान्यं हिरण्यं द्वादश्यां । कुप्यं ज्ञातिश्रैष्ठ्यं त्रयोदश्यां । युवानस्तत्र म्रियन्ते शस्त्रहतस्य चतुर्दश्यां । अमावश्यां सर्वमियाऽमावाश्यायां सर्वमिति ॥ ६ ॥

COLOPHON : इति श्रीश्राद्धकल्पः समाप्तो वाजसनेयकः ।

Post-Colophonic : संवत् १७३७ वर्षे शाके १६०२ प्रवर्तमाने दक्षिणायन गते श्रीसूर्ये हेमन्तऋतौ मार्गशीर्षमासे शुक्लपक्षे अष्टम्यां तिथौ भृगुवासरे मभेवडीस्थितेन भ० लक्ष्मीदासेन दवे कृष्णजित्-पठनार्थं लिखितमिदं श्रीरस्तु शुभं भवतु लेखकपाठकयोः ।

## 257. श्राद्धकल्पः

OPENING : श्रीगणेशाय नमः ।

अपरपक्षे श्राद्धं कुर्वीतोर्द्धं वा चतुर्थ्या यदहः सम्पद्येत तदहर्ब्राह्मणानामन्त्रय पूर्वेद्युर्वा स्नातकानेके यतीन् गृहस्थ दन्(?वत्) साधून् वा वृद्धान् अनवद्यान् स्वकर्मस्थानभावेपि शिष्यान् स्वाचारान् श्यावदन्तविन न व्याधितव्यंगिश्चित्रिकुष्ठिकुनखिवर्जं आनन्द्येन आमन्त्रितोनापक्रामेद् आमन्त्रितो वान्यदन्नं न प्रतिगृह्णीयात् ।

CLOSING : asat No. 256

COLOPHON : इति श्रीकात्यायनकृतश्राद्धकल्पः समाप्तो वाजसनेयिकः ।

Post:-Colophonic : संवत् १८७६ ना मार्गशीर्षमासे कृष्णपक्षे चतुर्दश्यां गुरौ लिखितं आचार्य शामजी-सुत देवनन्द ।

## 274. सन्ध्यातत्त्वविवरणम्

OPENING : श्रीगणेशायनमः । ॐ नमः ।

जयति गिरिशबालः स्वर्णमाणिक्यमालः,
स्फुरदुरसि विशालः स्फारसिन्दूरभालः ।
नटकनिकटतालः प्रोल्लसत्कान्तिजालः,
सकलदुरितकालः स्वर्णरत्नप्रवालः ॥१॥
यं वेदत्रितयं सदा निगदते कालत्रयस्थायिनं,
लोकानां त्रितयस्य येन भवति प्रायादवस्थात्रयम् ।
यं वर्णा त्रिगुणं त्रयोऽपि निपुणं ध्यायन्ति सन्ध्यात्रये,
तं भास्वन्तमनन्तमौपनिषदं भक्त्या मुहुर्भावये ॥ २ ॥
हरन्तं संसारं निगमवनसारं त्रिजगतां,
सदाधारं पारं स्थितिनिलयनारम्भजलधेः ।

उदारं सद्दारं समुपहितहारं हृदि परं,
भजे वारं वारं मदनसुकुमारं रघुपतिम् ॥ ३ ॥
आलोच्याप्यखिलश्रुतिस्मृतिपुराणाद्यर्थनिर्णायकं,
भाष्यं वेदवचोऽर्थसंशयसमुच्छेदाय दृष्ट्वा मुहुः ।
विद्वल्लोकहितायनायतगिरासारार्थमत्याहितं,
**सन्ध्यातत्त्व**मतिस्फुटं प्रकुरुते **रामाश्रमाख्यो** यतिः ॥ ४ ॥

CLOSING :

विप्रवृन्दमखिलं सुनिर्मलं वेदशास्त्रसुविचारसङ्कुलम् ।
प्रार्थयामि सततं हि केवलं नाऽधिकोऽस्ति रचितो हि दैवतम् ॥ १ ॥
बीजब्रह्ममहीप्रभू[त]सुकृतं तस्यैव शाखा श्रुतिः,
छंदांसि च्छदनानि पल्लवचयः स्वाध्यायहोमादयः ।
आचार[;]स्तवकस्तपश्च कुसुमं ब्रह्मावबोधः फलं,
सन्ध्यामूलमुदाहरन्ति कृतिनो भूदेवभूमीरुहः ॥ २ ॥
तस्मादवैधकृतिघोरकुठारधारात्,
संरक्ष मूलमनिशं फलकामना चेत् ।
मूले गते नहि फलं न दलं न पुष्पं,
शाखाऽपि नैव न कदापि पुनः प्ररोहः ॥ ३ ॥
ब्रह्मा जृम्भायते यस्मिन् गायत्र्यार्थसाधने ।
का कथाऽस्मद्विवादीनां क्षन्तव्यं वेदविद्द्विजैः ॥ ३ ॥
शिवरामप्रीतये ने[चे]दं गुह्यं गोप्यं प्रकाशितम् ।
न देयं पाठजम्भेभ्यो मानस्ते द्विजाधमे ॥ ४ ॥
आसीत् पुरा यतिवरः किल विश्वनाथो,
विष्णवाश्रयोऽपि समभूत् खलु तस्य शिष्यः ।
तस्यापि शिष्यमुखगोपति-**रामचन्द्रः**,
शिष्योऽपि तस्य च **महादिमदेव**नामा ॥ ५ ॥
शिष्यस्तदीयो गुरुपादसेवी **रामाश्रमाख्यो** रघुनाथभक्तः ।
श्रीरामतुष्ठ्यै व्यलिखत् सुभाष्यं **सन्ध्याविवर्णं** जगदर्थमेतत् ॥६ ।
संवत्यङ्काभ्रममुनिचन्द्रमिते (१७०९) वरेऽब्दे,
शाके च वेदमुनिबाणयुते च उर्व्याम् (१५७४) ।
................ स्यऽष्टमीगुरुकृष्णपक्षे,
**रामाश्रमेण** रचितं किल **काशिपुर्याम्** ॥ ७ ॥

COLOPHON :

इति श्रीमत्परमहंसपरिव्राजकरामाश्रमविरचिते सन्ध्याविवर्णे सम्पूर्णोयंः ग्रन्थ ॥
ग्रथा० २२००

## 284. स्मृतिसमुच्चयाह्निकम्

OPENING :

श्रीगणेशाय नमः

इन्द्राग्नी च यमं वन्दे निरर्ति वरुणं तथा ।
वायुं कुबेरमीशानं ब्रह्माणं विष्णुमेव च ॥ १ ॥

इन्द्राद्यांश्च प्रणम्यादौ वेदशास्त्रानुसारतः ।
द्विवेदिबद्रिनाथेन क्रियते च यथाह्निकम् ।। २ ।।

CLOSING :

नमस्तस्मै भगवते वासुदेवाय वेधसे ।
वपुर्ज्ञानमयं सौम्या यन्मुखाम्बुरुहासवम् ।। १४ ।।
एतदेवात्मभू राजन् नारदाय विप्र(पृ)च्छते ।
वेदगर्भोऽभ्यधात् साक्षाद् यदाह हरिरात्मने ।। १५ ।।

COLOPHON :

इति श्रीस्मृतिसमुच्चयाह्निके पूजाविधिः ।

## 300. आराधनाप्रयोगः

OPENING :

(द्वादशाहकृत्यम्)

श्रीगणेशाय नमः ।

अथ द्वादशाहे त्रयोदशाहे वा यथाचारमाराधनं । तत्र प्रयोगः। गुरुचतुष्टयस्य केशवादीनां च प्रत्येकमेकैक इत्येवं षोडशब्राह्मणपक्षमभिप्रेत्योच्यते ।

CLOSING :

प्रतिमासेव माराधनं सत्यब्दं पार्वणोत्तारं चाराधनं चैवमेव । इत्थं करणाशक्तौ यथाशक्ति यतीन यथाशक्ति ब्राह्मणान् आहूय पादे प्रक्षालनपूर्वकं गन्धादिभिरभ्यर्च्य भोजयेदिति ।

COLOPHON :

इति नागरखण्डेनुसार्याचारानुगृहीत आराधनप्रयोग·

Post-Colophonic

रामचन्द्रसदाशिवात्मज जोशि आजर्लेकरेन लिखितम् । ××× शके १८४८ हेमलम्बनामसंवत्सरे । भाद्रपदे मासि । कृष्णपक्षे त्रयोदश्यां तिथौ इदं पुस्तकं समाप्तम् ।

## 311. ऐन्द्री शान्तिः

OPENING :

श्रीगणेशाय नमः ।

अथ ऐन्द्री शान्तिः ।

राज्यादिवृद्धिकामेन पूजा कार्या शचीपतेः ।
पुण्यर्क्षदिनयोन (योगं च) चन्द्रताराबलेन च ।। १ ।।

CLOSING :

हवने पूजने मन्त्रा ह्यैन्द्राग्रां स्वाः पृथक् पृथक् ।
महां इन्द्रेति वा यद्वा मन्त्रः सर्वसम्मतः ।। ११ ।।

COLOPHON :

इति विष्णुधर्मोत्तरे ऐन्द्री शान्तिः ।

## 311. राज्ञः पट्टाभिषेकपद्धतिः

OPENING :

अथ राज्ञः पट्टाभिषेकपद्धतिः ।

प्रथमं मातृस्थापनादिब्राह्मणवरणार्चनपुण्याहवाचनानि । आचार्यस्य उष्णीष-श्वेतवस्त्र-चन्दनमाल्योपनीत-सर्वाभरणधारणं । अप्रतिरथस्वस्त्ययनं । आयुष्यापराजितपठनम् ।

CLOSING : पट्टराज्याभिषेचनं । तुरङ्गस्याभिषेचनं मन्त्रेण अश्वमारुह्य मार्गेण स्वपुरभ्रमणं । मुख्यामात्य-मन्त्रिसांवत्सर-पुरोहितैरश्वारूढैः सह नगरस्थसर्वदेवताभिगमनं पूजा-प्रणामाः । नरवाहनदर्शनं । प्रकृतीनां विसर्जनं । दीनादिभ्योऽन्नादिदानं । अमात्यादिसन्तोषणम् ।

COLOPHON : इति राज्यपट्टाभिषेकपद्धतिः ।

Post-Colophonic संवत् १८३३ ना आश्विन शुक्ल १३ भृगुवासरे लि. केश[व]जीभवा धनजिताख्येन मोरबीमध्ये ।

## 317. कुशकण्डिका

OPENING : श्रीगणेशाय नमः ।

अथ कुशकण्डिका लिख्यन्ते—

कुण्डं स्थण्डिलं वा यथाविधिना सम्पाद्य । स्थण्डिले पञ्चभूसंस्कारान् कुर्यात् । तद्यथा—त्रिभिर्दर्भैः पश्चिमत आरभ्य प्रागन्तमुदक्संस्थं त्रिः परिसमुहेत् ।

CLOSING : इति स्मार्त्ताग्निमध्ये लौकिकाग्नौ वा होमस्तदा अनेन विधिना माध्यन्दिनानां कुशकण्डिका पूर्वको प्रारम्भो कुर्यात् ।

COLOPHON : इति श्री**गंगाधरभट्ट**-विरचिता **कुशकण्डिका** समाप्ता ।

## 321. कृष्णजन्मोत्सवविधिः

OPENING : श्रीराधागोविन्ददेवो जयति ।

अथ श्रीकृष्णजन्मोत्सवविधिर्लिख्यते —

तत्र सप्तमीकृत्यं अङ्गने स्नानवेदिकां कुर्यात् । तत्र पुरो दीर्घिकाकारं । लघेष्ट-खातं च कुर्यात् । वेधाः कोणचतुष्टये कदलीस्तम्भानारोपयेत् । रक्तसूत्रैस्तान् सप्तधा सर्वतः परिवेष्टयेत् । तदुपरि चन्द्रातपं विभाव्य तद्दिक्चतुष्टये पताकारोपणं कुर्यात् ।

CLOSING : ॐ स्वस्ति नः इन्द्रो वृद्धश्रवाः स्तस्ति नः पूषा विश्वदेवाः स्वस्ति नः तार्क्ष्यो विष्टेनेमिः स्वस्ति नो बृहस्पतिर्दधातु । ॐ स्वस्ति इति त्रिरुच्चरेत् ततो द्यौः शान्ति-रापः शान्तिरौषधयः शान्तिर्वनस्पतयः । शान्ति शान्तिरेव शान्ति पृथिवी शान्तिः ।

COLOPHON : इति ग्रन्थ सम्पूर्णं समाप्तम् ।

## 325. क्रियापद्धतिः

OPENING : श्रीगणेशाय नमः ।

अथ क्रियापद्धतिर्लिख्यते—

मृतस्थाने शबो नाम द्वारदेशे च पान्थकः ।
चत्वरे खेचरो नाम विश्रामे भूतसंज्ञकः ॥
मृतायां साधको नाम शेजे प्रेतोऽभिधीयते ॥ १ ॥

आचमनं । प्राणायामं तारं विना । अत्राद्यतिथौ अपसव्यं । अमुकगोत्रस्य अमुक-प्रेतस्य निवृत्त्यर्थं षट्पिण्डविधिमहं करिष्ये ।

CLOSING : अथ कोकीलप्रोक्तं मातृसंयोजनविधिः । आचमनं । प्राणायामः ।

× × × × × × × × प्रेतायाः अर्घस्य प्रथमांसं प्रेतायाः मातामह अर्घेण सह संयुज्यतां सह संपु(यु)नज्मी ॥ १ ॥ अर्घस्य द्वितिया संप्रेतायाः प्रमातामह अर्घेण सह सं० ।२। अर्घस्य सर्वांसं प्रेतायाः बद्धप्रमातामह अर्घेण सह संयु० ।३। अर्घसंयोजनवत् । पिण्डसंयोजनं कृत्वा ।

COLOPHON : इति कोकिलप्रोक्तं मातुसंयोजनम् ।

Post-Colophonic : श्रीमालिज्ञाति तथाशाचारा ने पण मोशालपक्ष छे ।

## 326. क्रियापद्धतिः

OPENING : श्रीगणेशाय नमः ।

अथ क्रियापद्धतिर्लिख्यते—

आचमनं प्राणायामं तारं विना । अत्राद्यतिथौ० अपसव्यं । अमुकगोत्रस्य प्रेतत्वनिवृत्त्यर्थं षट्पिण्डविधिमहं करिष्ये ।

CLOSING : दशाहश्राद्धविधिः पारीपूर्णता । ततोत्थाय दशस्नानं कृत्वा । वस्त्रस्य त्यागं० ततो गृहमागत्य । प्रथमदिवसे उपवासं वा भोजनं हविष्यान्नमेव भुंजित । लेपनस्य हास्यहर्षोच्चासनोत्कृष्टवस्त्रादिचारणतैलाभ्यङ्गस्त्रिसंगखट्वाशयनान्यस्पर्शनादि वर्जयेयुः । रात्रौ भूमौ शयीरन् । अक्षारा लवणाशनं न कुर्यात् । श्रवणिकर्मपर्यन्तं उपानं न धार्यते । गर्त्तं पूरियित्वा तदुपरि नित्यश्राद्धविधि समाप्तम् ।

Post-Colophonic : श्री । संवत् १८४५ कारतकसुद ७ बुधे लखतं गदाधर ।

## 327. क्रियापद्धतिः

OPENING : श्रीगणेशाय नमः ।

ॐ उर्ध्वदेहिक्रिया लिख्यते—

तीर्थं गत्वा । अश्वत्थसमीपे स्थानशुद्धिं कृत्वा वस्त्रान् प्रक्षाल्य आतपे स्थापयेत् । एकदीपं कृत्वा निर्वातस्थले निधाय । यजमानः । तीर्थे गत्वा । स्नानविधिं कृत्वा । अश्वत्थसमीपे आगत्य सत्येशार्थे स्थण्डिलं । १ ।

CLOSING : त्रिः मासिकश्राद्धकृतैः अपसव्यं । अमुकगोत्रस्य अमुकप्रेतस्य प्रेतत्वे निवृत्तिः । असद्गति मृत्युविनाशः सद्गति स्वर्गलोकप्राप्तिः अग्रेतन । सव्यं । अस्य मासिकश्राद्धस्यार्चनविधेः सर्वं परिपूर्णता । आचमनं । तुलसीदलं गृहीत्वा । कायेन वाचा० यस्य० ।

COLOPHON : क्रियापद्धति समाप्तः ।

Post-Colophonic : लखितंग दवे डोशासुत पुरुषोत्तम । संवत् १८५६ ना चैत्रसुद ९ गुरुवासरे ।

## 335. गृह्य-पद्धतिः*

OPENING : श्रीगणेशाय नमः । ॐ नमो भगवते श्रीवासुदेवाय ।

अथ गृह्यसूत्रविहितानामाधानादिसर्वकर्मणां साधारणो विधिरुच्यते । तत्र आव-

---

*Acc. no. may please be read 1322 in place of 1332 in the text.

सथ्याधानादिवक्ष(क्ष्य)माणेषु सर्वकर्मसु यजमानस्यैव कर्तृत्वम् । ऋत्विगन्तरस्याभिधानात् । परिसमुह्येत्यादि ।

CLOSING : प्रतिष्ठानमसि, ब्रह्मकोशोऽसि, शनिरसि, शान्तिरसि, अनिराकरणमसि, ब्रह्मकोशं मे विशद्यावात्वापि दधामि वाचात्वापि दधामीति, तिष्ठ तिष्ठ स्वकरणकं-ग्रहण-धारणाऽवधारणाशक्तिर्मयं भवं चाप्यायन्तु मेऽङ्गानि वाक्प्राणश्चक्षुःश्रोत्रं यशोबलं यन्मे श्रुतमधीतं तन्मे मनसि तिष्ठतु तिष्ठतु इति ।

COLOPHON : इति श्री**वासुदेव**विरचितायां **गृह्यपद्धतौ** तृतीयकाण्डः समाप्तः ।

Post-Colophonic : संवत् १८५७ ना वरषे चैत्रवद १३ शनिवासरे लखितंग । अद्येह श्रीपश्चिमखण्डे श्रीश्रीश्रीश्रीमालज्ञातीय दु० डोशासुत पुरुषोत्तममिदं वासुदेवीयम् ।

## 380. पार्थिव-चिन्तामणि-प्रयोगः

OPENING : श्रीगणेशाय नमः ।

अथ पार्थिवचिन्तामणिप्रयोगो लिख्यते । रुद्रयामले लैङ्गे च—

अथातः सम्प्रवक्ष्यामि प्रतिष्ठां लैङ्गिकस्य च ।
येन यस्य विधानेन व्रतसम्पूर्णतामियात् ॥ १ ॥
सहस्रं वाऽथ लक्षं वा पूजयित्वा यथाविधि ।
कोटिं वाऽथ विधानेन कामना वा प्रपूर्यते ।
समाप्ते च व्रते राजन् विनिर्माय महेश्वरम् ॥ २ ॥

CLOSING : श्रीश्चेति लक्ष्मीहोमः । स्विष्टकृद्होमः । नवाहुतयः । स्थापितदेवतानां पुनः पूजनं । वास्तुस्थापने बलिदानं । मण्डपाद्बहिर्दिक्पतिभ्यो बलिं दद्यात् । पूर्णाहुतिः । चितिं जुहोत्यनुवाकेन घृतेन छिन्नधारया । होमसंकल्पः । बटुकान् कुमारिसं० । ब्राह्मभो० । पूर्णपात्रं । आचार्याय पूजायुक्तं लिङ्गं समण्डपं सवस्त्रं दद्यात् । अन्यान् ऋत्विजः दक्षिणां दद्यात् । तिलपात्रं घृतपात्रादि । अघपू० पार्थिवलिङ्गा कर्मकृतस्य विधेयं० स्तु । यान्तु देवविसर्जनम् ।

COLOPHON : इति द्विवेदी-**मयाशङ्करेण** रचितः संक्षेपतो **चिन्तामणिप्रयोगः** ।

## 384. पुत्तलकविधिः

OPENING : श्रीगणेशाय नमः

अथ पुत्तलकविधिर्लिख्यते—**दालभ्यस्मृतौ** तथा **विधानमालायां** तथाहि **गु(ग)रुड पुराणे** ग्रन्थत्रयं विलोक्य **पुत्तलकविधि**र्लिखितम् ।

CLOSNIG : शुक्रारार्किकषु दर्शभूतमदने नन्दासुनिक्षणो समे ,
पौष्णे वारुणभे त्रिपुष्करदिने न्यूनाधिमासेयने ।
याम्ये द्वारपरतश्च पातपरिघे देवज्यशुक्रास्तके ,
भद्रावैधृतयोः शबप्रतिकृते दाहोभ पक्ष(क्षे)सिते ॥१॥

पुत्तलकविधिः। तत्र कालशुद्धिः। आशौचमध्ये पुनः संस्कारे यथासंभय(व)दिनं शोध्यं कालान्तरे तु शोध्यमेव। संवत्सराद् ऊर्ध्वं प्रेतकार्ये उत्तरायण। तत्रापि कृष्णपक्षः तिथिनंदा-त्रयोदशी-चतुर्दशी दिनक्षयं च वर्जयेत्। शुक्र-शनिवारौ वर्ज्या। षट्त्रिंशद्मरणे पुत्तलकविधि कुर्यात्।

## 387. प्रतिष्ठा-प्रयोगः

OPENING :

श्रीगणेशाय नमः।

अथ **निर्णयसिन्धुप्रतिष्ठामयूख** चाऽनुसृत्य स्थिरलिङ्गाच्चाप्रतिष्ठानं प्रयोगः। तत्र तत्कालाः **हेमाद्रौ लक्षणसमुच्चये**।

उत्तराशागते भानौ लिंगस्थापनमुत्तमम्।
दक्षिणे त्वयने पूज्य त्रिवर्षार्द्धे भयावहम्॥
स्वगृहे स्थापनं नेष्टं तस्माद् वै दक्षिणायने।
स्थापने तु प्रकर्त्तव्यं शिशिरादौ ऋतुत्रये॥
प्रावृषि स्थापितं लिङ्गं भवेद् वरदयोगदम्।

CLOSING : & COLOPHON :

इति श्रीज्योतिःशिवदत्तसूरिसूनु-भवदत्तात्मज-शङ्करदत्तेन निर्णयसिन्धु-प्रतिष्ठा-मयूखौ अनुसृत्यान्वयीकृतसर्वदेवप्रतिष्ठापनकर्त्तव्यताप्रयोगः समाप्तः।

**भवदत्त**सुतेनेत्थं **शंकरेण** द्विजन्मना।
कृतश्रमस्तेन विभुः शङ्करः प्रीयतां मम॥ १॥

Post-Colophonic :

**संवत् १८८४ मार्गशीर्षवदद्वितीया। लखितं दवे गोवर्द्धन-केशवजी स्वार्थे परा-पकाराय च इति।**

## 388. प्रयोगदर्पणम्

OPENING :

(सर्वसंस्कारपद्धतिः)

श्रीमहागणाधिपतये नमः।

यो वन्द्यस्त्रिदशैः सदैव यम(मि)भिर्वन्द्यस्तथा योगिभि-
र्यो विघ्नौघविनाशनेऽप्यतिदृढो भाग्यप्रदः सेविता(ना)म्।
यो विश्वार्त्तिहरस्तथैव सुखदः साहित्यविद्यानिधि-
स्तं वन्दे गिरिजात्मजं गणपतिं वाक्सिद्धये सर्वदा॥ १॥
वन्दे श्रीवैष्णवीं मूर्तिं मोहिनीं कुलदेवताम्।
**प्रवरायास्तटे** रम्ये **निवासपुरवासिनीम्**॥ २॥
श्रीमद्**गोपाल**पितरं **नारायण**पितामहम्।
श्रीगुरुं **शितिकंठाख्यं पार्वतीं** दैवमातरम्॥ ३॥
नाम्ना वै **पद्मनाभस्तु** दीक्षितश्रीदयान्वितः।
तनोति विदुषां प्रीत्यै **सर्वसंस्कारपद्धतिम्**॥ ४॥

रम्यां नवीनां सुगमां नानावाक्यसुधामयीम् ।
प्रयोगदर्पणाख्यां वै चक्रे पद्धतिमुत्त[मा]म् ।। ५ ।।

CLOSING : & COLOPHON : इति श्रीमद्दीक्षितो नारायणात्मज-गोपालसुत-पद्मनाभविरचिते प्रयोगदर्पणे रजोदर्शन-शान्तिप्रकरणं समाप्तम् ।

अथ गर्भाधानं रजोदर्शनात् षोडशादे रात्राणि ऋतुस्तन्मध्ये रात्रिचतुष्कं पर्वादिनिषिद्धदिनानि च वर्जयित्वा तत्रापि युग्मासु कन्या जायेत इत्यादि, तत्राऽयंक्रमः अद्येत्यादि ए० पुण्यतिथौ अस्या मम भार्यायाः प्रथमगर्भाति०.........

Post-Colophonic : इयं षोडसीकर्मपुस्तकं पुष्करे रामरतनसुत-नानूराम-पुस्तकात् लिखितं । स० १९१९ का भाद्रवशुक्ल १२ मगनीरांमेणालेखि कृष्णगढमध्ये ।

## 421. रामायणप्रयोगविधिः

OPENING : श्रीकृष्णाय नमः

अथ **रामानुजकल्पद्रुमोक्त** रामायणप्रयोगविधिः—

तत्र प्रथमं कालनिर्णयः, हयग्रीवो-चन्द्रतारानुकूले च शुक्लपक्षे शुभेऽहनि, आरभेत पुरश्चर्यां गुरौ सुप्ते न चार्चयेत् ।

CLOSING : ततो ब्राह्मणभोजनं मासनामानि यथा—

कृष्णोऽनन्तोऽच्युतश्चक्री वैकुण्ठोऽथ जनार्दनः ।
ॐ परो यज्ञपुरुषो वासुदेवस्तथा हरिः ।। १ ।।
योगीशः पुण्डरीकाक्षो मासनामान्यनुक्रमात् ।

चैत्रान्मार्गशीर्षाद्वा गणनया यस्मिन् मासे जातः शिशुर्भवति तत्संख्याकं मासनामेति । ज्योतिःशास्त्रे तु अवकहडाचक्रानुसारेण नक्षत्रचरणानुसारणी । इति नामकर्म ।

## 426. रुद्रपद्धतिः

श्रीगणेशाय नमः ।

OPENING : अथ महारुद्रपद्धतिरुच्यते—

[ज्योति] विदुक्त शुभकाले गुरुभार्गवयोः मौढ्यबाल्यवार्धक्यरहिते यथासंभववित्तादिना प्रायश्चित्तं कार्यं । तदुक्तं परशुरामपद्धतौ० ।

CLOSING : ततः सम्पूर्णमस्त्वच्छिद्रमस्त्विवति सर्वे वदेयुः । ततस्तेषां मन्त्राशिष्ये गृहीत्वा तान् सा मुनयं विसृज्य ब्राह्मणान् भोजयित्वा दीनाऽनाथांश्चाऽन्नादिना संतोष्य स्वयं सुहृन्मित्रादियुतः सोत्साहः सन्तुष्टो हविष्यं भुञ्जीत इति ।

COLOPHON : इति **नारायणभट्ट**कृता परशुरामानुसारी श्री**रुद्रपद्धतिः** समाप्तः ।

Post-Colophonic : संवत् १८२९ ना वर्षे आशाढमासे शुक्लपक्षे १५ पौर्णिमास्यायां तिथौ भौमवासरे लि० दवे श्री ५ केशवजी-तत्सुत-धनजी तथा नानापठनार्थम् ।

## 428. रुद्रपद्धतिः

OPENING :

श्रीगणेशाय नमः ।

श्रीगणेशं गुरुं नत्वा शारदां च वरप्रदाम् ।
विप्रः **परशुरामाख्यः** कुरुते **रुद्रपद्धतिम्** ॥ १ ॥
भुक्ति-मुक्ति-प्रदातारं सोमं सोमार्द्धधारिणम् ।
सदानन्दमयं शान्तं शिवं वन्दे शिवप्रदम् ॥ २ ॥
पूर्वाचायकृती दृष्ट्वा स्मृतीश्चागमसम्मतीः ।
हृद्यैः पद्यैः मुनीन्द्रोक्तैः क्रियते रुद्रपद्धतिः ॥ ३ ॥
पञ्चाङ्गान् जपितान् रुद्रान् याजुर्वेद्यान् द्विजन्मनाम् ।
मद्विधानां च मुग्धानां प्रबोधाय प्रबोधिनी ॥ ४ ॥
पञ्चांगसंज्ञया पंच रुद्राः प्रोक्ता विपश्चिता ।
एकाता अतिरुद्रान्ताः षडङ्गसहिता हिताः ॥ ५ ॥

CLOSING :
& COLOPHON :

ग्रन्थनिष्पन्नकालः—

संवद्विक्रमभूपस्य पञ्चदशशते गते ।
पञ्चदशोत्तरे वर्षे (१५१५) जन्माष्टम्यां प्रकाशके ॥ ३९ ॥
उदीच्यज्ञातिविप्रेण कर्णपुत्रेण धीमता ।
कृता **परशुरामेण महारुद्रस्य पद्धतिः** ॥ ४० ॥

इति यदिदमसूक्तं सूक्तमाहोस्विदुक्तं,
तदपि मनसि धार्यं द्वेषतो न प्रहार्यम् :
दधति मुदमशोके बालकोक्ते हि लोका—
मदुपरि रमणीया मित्रता धारणीया ॥ ४१ ॥

इति परशुराम-विरचिता रुद्रपद्धतिः समाप्ता । अस्मिन् ग्रन्थे ग्रन्थसंख्या १०३३ ।

सरस्वत्याः प्रसादेन मयाऽयं ग्रन्थमु(उ)त्तमः ।
कृतः परोपकारार्थं यज्ञविद्याविभूषणम् ॥ १ ॥

Post-Colophonic : संवत् १८२५ ना वर्षे फाल्गुनमासे सितेतरपक्षे प्रतिपत्तिथौ श्रीगुरुवासरे लि० दवे श्री ५ केशवजी-तत्सूनु धरनजी-स्वयमवलोकनार्थे ।

## 442. वास्तुशान्ति-प्रयोगः

OPENING :

श्रीगणेशाय नमः ।

अथ सग्रहवास्तुशान्तिप्रयोगः । तत्र दिनशुद्ध्यादिकं निर्णये द्रष्टव्यं । होमबलिदानादिकर्मादौ कृत्वाऽनन्तरं गृहप्रवेश इति ग्रन्थकारा आहुः । अस्मद्देशीयास्तु प्रवेशानन्तरं होमादि कुर्वन्ति इत्येवं यथास्वाचारमनुष्ठेयम् ।

CLOSING :

चन्द्रार्कावनिपर्यन्तं गृहेस्थिं विप्रवाक्यतः ।
स्वेच्छयाऽतिलाभसंहृष्टो भुंक्ष्व भोगान् सुखी भव ॥

ततो दैवज्ञद्विजांश्च दक्षिणादानादिभिः परितोष्यन् ब्राह्मणैरिष्टैर्बन्धुभिश्च परिवृतो भुंजीत, तं (तद्)दिने महान्तमुत्सवं कुर्यात् ।

COLOPHON : इति **श्रीशुक्लविश्रामात्मज-शिवराम**विरचितायां **गोभिलगृह्यपद्धतौ सुबोधिन्यां वास्तुशान्तिप्रयोगः ।**

Post-Colophonic : लि० नविनपुरमध्ये गिरिनारायणज्ञातीयभट-नन्दकेश्वर-डोशा ।

## 474. श्रीसूक्तविधानम्

(श्रीकल्पः)

OPENING : श्रीगणेशाय नमः

अथातः श्रीकल्पं व्याख्यास्यामः । पञ्चम्यां शुक्लपक्षस्य पौर्णमास्यां वा कदम्बमयं बिल्वसारमयं स्थण्डिलं विधायतेऽहोरात्रो पोषितः शुचिः कृतशौचः समदेशे गोमयेन गोचर्ममात्रं स्थण्डिलमुपलिप्य गन्धं सुमनसः संप्रकीर्य हिरण्मयेन पात्रेणोदकुम्भं पूरयित्वा गन्धं सुमनसमेतस्मिन् हिरण्यवर्णां हरिणीमिति ।

CLOSING :

न जातु कृपणोत्थाय श्रियमावाहयेत् क्वचित् ।
न यत् किञ्चन कामेन होमः कार्यः कथञ्चन ॥
महद्वा प्रार्थ्यमानेन राज्यकामेन वा पुनः ।
वाचः परं प्रार्थयिता यत्नायुक्तः श्रियं जपेत् ॥

COLOPHON : इति श्रीसूक्तविधानमदः । श्रीहरिर्जयति

## 495. सर्वदेवप्रतिष्ठाविधिः

OPENING : श्रीगणेशाय नमः ।

अथ सर्वदेवानां साधारणप्रतिष्ठाविधिर्लिख्यते—

ज्योतिर्विदादिष्टे सुमुहूर्त्ते स्नानादिकृतनित्यक्रियः पूर्वाह्णे शुभपीठाद्यासने प्रक्षालितपाणिपादो बद्धशिखा आचान्तः समुपविश्य देशकालौ संकीर्त्य अमुकमूर्त्तिप्रतिष्ठांगतया अमुकयन्त्रप्रतिष्ठांगतया वा मातृ पूज्ये । इति संकल्पः ।

CLOSING : ततो गुरुं सम्पूज्य तद्भावे तं ध्यात्वा सम्पूज्य तद्धस्तादेव मूर्त्तियन्त्रं वा गृहीत्वा शिरसि निधाय महान्तमुत्सवं कुर्यात् । यन्त्रं वे(चे)ल्लिखनः सर्वसाधारणो विधिः पूर्वोक्त एव ज्ञेयः । तद्दिने ब्रह्मचर्यं कार्यम् ।

COLOPHON : इति शुक्ल-**विश्रामात्मज-शिवराज**विरचिते यन्त्रचिन्तामणौ सर्वसाधारणसंक्षेपप्रतिष्ठाविधिप्रकाशसमाप्तिः ।

Post-Colophonic : दवे श्री ५ केशजी जीवछाणीना पत्र छे ।

## 496. सार्वदैविकी-पद्धतिः

OPENING : श्रीगणेशाय नमः ।

हरिं वरेण्यं वरदं वरेश्वरं षडूर्मिषड्भावविकारवर्जितम् ।
सुखात्मबोधं जगदण्डनायकं नमामि देवं नरसिंहविग्रहम् ॥ १ ॥

सर्वोद्यापनसोधाम यन्नाभिकमलं कृतम् ।
हरेश्च यस्य कान्तेन्दुकलया कमलङ्कृतम् ॥ २ ॥
पञ्चरात्राणि सर्वाणि सन्निरीक्ष्य मुहुर्मुहुः ।
देशिकानां सुखार्थाय प्रयत्नेन गरीयसा ॥ ३ ॥
श्रुतिस्मृतिपुराणज्ञो वेदान्तार्थोपदेशकः ।
**कृष्णामृतो** वै भगवान् संसारेष्वतिनिःस्पृहः ॥ ४ ॥
तस्य शिष्यो महाभागो गुरुपादाब्जवल्लभः ।
**पूजामृत**श्चकारेमां **पद्धतिं सार्वदैविकीम्** ॥ ५ ॥
इष्टापूर्त्तौ द्विजातीनां धर्मौ प्रोक्तौ सनातनौ ।
तत्रेष्टः स्वर्गफलदः पूर्त्तौ मोक्षप्रदः स्मृतः ॥ ६ ॥

CLOSING :

भूता[न्]भव्यांश्च मनुजां स्तारयेद् रो(व्यो)मसंस्थितान् ।
परां सिद्धिमवाप्नोति पुनरावृत्तिदुर्लभाम् ॥ २० ॥
य इदं श्रृणुयान्नित्यं श्रावयेद् वापि मानवः ।
सोऽपि संम्पूजितौ देवैर्ब्रह्मलोके महीयते ॥ २१ ॥

COLOPHON :

इति वृक्षोद्यापनविधिः समाप्तः ।

Post-Colophonic

संवत् १६२६ ना वर्षे पौषशुक्लसप्तम्यां मन्दवासरे श्रीरस्त । लिखितंग ज्ञातिय श्रीमालिदवे श्रीलिलाधर-भाणजीसुत-रेवाशंकर तथा रामशंकर स्वार्थे लिखितमिदं पुस्तकम् । श्रीनागेश्वर जुगदम्बा प्रसन्नोऽस्तु ।

## 509. संस्कार-पद्धतिः

OPENING :

ॐ नमः । श्रीमहागणपतये नमः ।

श्रीनृसिंहं शिवं नत्वा सदंरबां (सदम्बां) च सरस्वतीम् ।
गणेशं पितरौ कात्यायनादीन् कर्करेणुकौ ॥ १ ॥
**रामाग्निहोत्रि-पुत्रस्य** पुत्रो **गङ्गाधरा**भिधः ।
परोपकृत्यै कुरुते गद्यैः **संस्कारपद्धतिम्** ॥ २ ॥
ग्रन्थान्तराणि संवीक्ष्य यथामति मयोदितम् ।
उक्तानुक्तदुरुक्तं यदत्र शोध्यं तदार्यकैः ॥ ३ ॥

CLOSING :

यो **वात्स्यायनवंश**भालतिलको **रामो**ह्यभूद्भूतले ,
तत्पुत्रो वसुधां निजेन यशसा **दामोदरो** मन्दयन् ।
तत्पुत्रो व्यदधात् त्रयोदशसु संस्कारेषु गद्यैर्ऋजुं ,
विप्राणामुपकार एव निरतो **गङ्गाधरः** पद्धतिम् ॥ २ ॥

COLOPHON :

इति श्रीगङ्गाधरी-पद्धति सम्पूर्णतामस्तु ।

Post-Colophonic :

संवत् १८२२ मासे मार्गशीर्षे कृष्णे त्रयोदश्यां तिथौ मन्दवारेण संयुक्तो केशवात्मजेन लिलेख ।

## 511 संस्कारपद्धतिः

OPENING :

श्रीगणेशाय नमः ।

कश्यपादिमुनीन् नत्वा गुरूंश्चाचलदीक्षितान् ।
सर्वेषामुपकाराय कुर्वे **संस्कारपद्धतिम्** ॥ १ ॥

COLOPHON : इति श्रीमन्महायाज्ञिक-श्रीदीक्षित-ग्रानन्दरामकृता षोडशसंस्कारपद्धतिः समाप्ता।

## 518. स्वस्तिवाचन-कारिका

OPENING :

श्रीगणेशाय नमः ।

अथ स्वस्तिवाचनम् । कारिकायां स्वस्तिवाचनं यत्रेष्टं गृह्यकर्मसु केचित् अदृष्ट-मपि शास्त्रेषु मङ्गलार्थमुदीरितमिति । आश्वालाय[न]गृह्यपरिशिष्टे स्वस्तिवाचन-मृद्धिपूर्त्तेषु ऋद्धिविवाहान्ता अपत्यसंस्काराः प्रतिष्ठोद्यापने पूर्त्ततत्कर्मणश्चाद्यन्तयोः कुर्यादिति ।

COLOPHON : श्रीमद्**व्यावहारिको**पाख्य **धरणीधर** सू(नु)ना **दयाशंकरेण** कृ(तः) सांखाय[न] गृह्यसूत्रस्य प्रयोगप्रदीपे पुण्याहवाचप्रयोगः समाप्तः ।

## 588. भगवद्गीता सटीका

OPENING :

श्रीसरस्वत्यै नमः । श्रीपरमात्मने नमः ।

अथ न्यासः । ॐ अस्य श्रीभगवद्गीतामालामन्त्रस्य भगवान् वेदव्यास ऋषिरनुष्टु-प्छन्दः । श्रीकृष्णपरमात्मा देवता । अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे इति बीजं । सर्वधर्मान् परित्यज्य मामेकं व्रज इति शक्तिः ।

× × ×

अथ श्रीभगवद्गीता प्रारभ्यते । धृतराष्ट्र उवाच—

धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः ।
मामकाः पाण्डवाश्चैव किमकुर्वत सञ्जय ॥ १ ॥

**अर्थ**—राजा धृतराष्ट्र संजय सेती कहै है । हो संजय ! धर्म का क्षेत्र जिस विषय धर्म कीजीये ऐसा जु कुरुक्षेत्र, तिसकै विषै मिलै-एकत्र हूये । मेरे पुत्र दुर्योधनादिक अरु पांडु के पुत्र युधिष्ठिरादिक युद्ध करणे की इच्छा करिकैं, सु क्या करत हूये । सु तूं मुझ सेती कहु । ऐसा पूछता हूवा संजय कौं ॥१॥

CLOSING :

**सूत्रम्**–यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥ ७८ ॥

**टीका**—हे राजन् ! जिन्ह के पक्ष योगेश्वर श्रीकृष्ण है अरु धनर्द्धर अर्जुन है तहांई राज्यलक्ष्मी है अरु विजै भी उन्हीं का है । विभूती की आगै आगै वृद्धि तिन्हीं कै है अरु निश्चय नीति तिन्हीं कै है । मेरी मति में यौं आवै हैं ॥ ७८ ॥

W-COLOPHON : इति श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे परमार्थनिर्णयो नाम अष्टादशोऽध्यायः ॥ १८ ॥

Ct.-CLOSING : इति श्रीभगवद्गीता-भाषा-प्राकृत सम्पूर्ण । समाप्तोऽयम् ।

Post-Colophonic संवत् १८०३ रा वर्षे । शाके १६६८ प्रवर्त्तमाने मासोत्तममासे कार्तिकमासे शुक्लपक्षे सप्तमीतिथौ भृगुवासरे । पण्डित प्र० श्री५ नैणसीजी तत्शिष्य पं०प्र० श्री **मोटाजी** तत्शिष्य पं० कुशलचन्देन लिपिकृता । श्रीतलवाड़ाग्राममध्ये ।

## 589 भगवद्गीता (सटीका)

Ct.-OPENING : ॐ श्रीगणेशाय नमः ।

ॐ अस्य श्रीभगवद्गीता मालामन्त्रस्य श्रीभगवान् वेदव्यास ऋषिः, अनुष्टुप्छन्दः श्रीकृष्णपरमात्मा देवता, अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे इति बीजम् ।

× × × × ×

धर्मक्षेत्र कुरुक्षेत्र मैं, मिले युद्ध के साज ।
संजय मो सुत पांडवनि, कीने कैसे काज ॥ १ ॥
पाण्डव सेना व्यूह लखि, दुर्योधन दिग आय ।
निज आचार्य द्रोन सों बोले ऐसो भाय ॥ २ ॥

Ct.-CLOSING :
यह गीता अद्भूत रंन, श्रीमुख कियो वख्यान ।
वार वार निर्द्धारि किय, पराभक्ति निज ज्ञान ॥ ७९ ॥
भक्त तस्य श्रीकृष्णजु, यह कीनो निरधार ।
करै भक्ति इच्छा यहै, सवै वेद को सार ॥ ८० ॥
गीता दिन प्रति उच्चरै, सदा सुद्ध जग मांहि ।
मनसा वाचा कर्मणा, ताहि सम कोउ नाहि ॥ ८१ ॥
जो कोउ चाहे भोते, कृष्ण कवल-दग पास ।
और सकल श्रमु छाडिकै,(क)रि गीता अभ्यास ॥ ८२ ॥
भगती ही ता जो कोउ, पढे सुने जु चित लाय ।
पावै भक्ति अखंड सो, श्रीहरिदास साहाय ॥ ८३ ॥
जब लगि संश्रित भानकी, ताप तपत सब देस ।
दृष्टि परै जब लगि नहि, हरि-गीता-राकेस ॥ ८४ ॥

Post-Colophonic : संवत् १८ ७ मिती वैसाषवदि ६ नवम्यायां वार व्रस्पतवारे लिखायते जोसि दयाराम श्रीगोपीनाथजी का मदर (मंदिर) मध्ये ।

## 590. भगवद्गीता (सार्थ)

Ct.-OPENING : × × × × × × धारी रूपीयां तृण केहे छे। ते सूं। बीजा तृण उपजावे तहां भूमि खेडे पछे वावे । पछे इन्द्र सींचे । देहधारी रूपीयां येह तृण तेहने को वावनाहार नथी ते उपजवा प्रते भगवंत नी ईछा ते कारण एक थको अनेक ने

परस्परे उपजावे। वली केहवो छे ते ब्रह्म। ये काले वस्त्र नी परे जूनूं न थाय। अग्नी वडे काष्ठ नी परे बले नही। ये उदक वडे कोहे [भीजाय] नही। येह ब्रह्म समस्त विश्व नू बीज तेहने नमूं छूं।

Ct.-CLOSING : हे नरेन्द्र महाबुद्धि जोइतां इम मांनु छूं जहां ब्रह्मांडकोटि नु नाथ श्रीकृष्णजी येहनी सेनानि विषै छे। अने अर्जुन सरखु योद्धा धनुर्द्धारी बलवत छे तिहां मूर्ति लक्ष्मी अने जयश्री तेहने छे। वली समस्त कल्याण समस्त सुख तिहां छे। राजन् जोतां मुझने एहवूं भासे छे। जे ताहरा पुत्र ने जीवतव्य नी आशा तथा जय पांमव नी आशा वेगली देखु छूं।

COLOPHON : इति श्रीभगवद्गीतासूपनित्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवदे सर्वसारसंग्रहो नाम अष्टादशोध्याय: समाप्त:।

Post-Colophonic : संवत् १८१५ ना वर्षे चैत्रमासे कृष्णपक्ष सनीवारे नोंमी दिने। सम्पूर्णम्।

## 600. दत्तगीता (सार्थ)

OPENING : श्रीगणेशाय नमः।

आत्मानं अमृतं हित्वा भिन्नमोक्षार्थमव्ययम्।
कुतो हि कुत्सित: काको वर्तते नरकं प्रति ॥ १ ॥

**टीका**—सर्व व्यापक होए तेहनें आत्मा कहियें। ज्येह को वस्तु थी भीन्न नथी, ज्येह नो नास नथी एहवो मोक्ष रूप ज्ये आत्मा तेहनें त्यजी ने कुत्सित केहतां निंदित कागडा सरखो जे मनुष्य ते नरक प्रतें दोड़े छे ॥ १ ॥

CLOSING : विन्दति विन्दति नहि नहि मन्त्रो नहि नहि तन्त्रो लक्षणछन्द:।
समरसमग्नो भावितपूतः प्रलपितमेतत् परमवधूतः ॥ २० ॥

**टीका**—ज्ये आत्मानें कोए पुरुष जांणतो नथी। घणाए मंत्र ना आराधन ना अभ्यास करें। तोहें मंत्रें न यणाय। ये मोक्ष ने नांना प्रकार ना। तन्त्र ज्ये शास्त्र ते जांणता न थी। लक्षणें करी आत्मां जांण्यो न जाय। छंद ये वेद तेंणेय आत्मा जांण्यो नही। एवूं अवधूत जे सर्व परित्याग करीनें रह्या तेणें एवूं कह्यूं छें। अवधूत केवा छें? ए सर्वत्र समान आत्मा ने देखे छे। भावनाये। आत्मा ध्यान तेणें करीनें जाणे ते साक्षात् केवल्य मोक्ष पांम्यो जांणीयें ॥ २० ॥

COLOPHON : ए सातमा प्रकरण नो अर्थ संपूर्ण।
इति दत्तगीता समाप्तं।

Post-Colophonic : लेखक गुसांई अनंदगीरजी ईदं पुस्तकं।

## 605. पितृगीता

OPENING : श्रीगणेशाय नमः।

भजनं निधिरूपं ते पितृभक्तिविधे: फलम्।
ऋषय: परिपप्रछु: मासं (व्यासं) धमार्थकोविदम् ॥ १ ॥

पितृभक्तिः कथं कार्या किं तस्याश्च फलं भवेत् ।
इमं प्रश्नं व्यासमुने ब्रूहि सत्यं समासतः ॥ २ ॥

व्यास उवाच—

शृण्वन्तु मुनयः सर्वे यदर्थं ध्रुवमागताः ।
तदहं संप्रवक्ष्यामि पितृभक्तिविधि(धेः)फलम् ॥ ३ ॥

CLOSING : रुक्मिण्युवाच—

इति तान् विनयोपेतान् मुनीन् प्रष्टुं समागमत् ॥ ४० ॥
उवाच पितृमाहात्म्यं ढुढेर्मसो महामुनिः ।

COLOPHON : इति श्रीपद्मपुराणे तक्षकवंशप्रकाशे पितृगीताकथनं नाम द्वितीयोध्यायः ।

## 606. रामगीता-टीका

OPENING : श्रीरामाय नमः ।

गणेशं कमलानाथं प्रणिपत्य गुरोः पदम् ।
करिष्ये रामगीतायाः व्याख्यानं बालबुद्धये ॥ १ ॥

CLOSING : अल्पग्रन्थेन ब्रह्मविद्याजिज्ञापयिषुर्वाल्मीकिः कथानकमाह-ततो जगन्मङ्गल इति । विज्ञानमिति । वेदान्तवेद्यचरणे वेदान्तैरुपनिषद्भिः वेद्यं यद् ब्रह्म तदेव सन् रामरूपेण यश्चरति वेदान्तवेद्यचरणः तेन मयैव गीतं श्रुतिसारसंज्ञं वेदान्तसाराख्यं एतद् विज्ञानमखिलं समग्रं श्रद्धया पठेन्नित्यं पठति गुरुभक्तियुतः गुरौ प्रीतिमान् साऽमलमनः सन् अन्ते देहान्ते मयि एव प्रलीयते मुक्तो भवति ॥ ६२ ॥

COLOPHON : इति रामगीता परिपूर्णाऽभवत् ।

Post-Colophonic : श्रीभयहरनगरे ।

## 726. दशावतारावतरणहेतुज्ञापनम्

OPENING : मत्स्यः कूर्मो वराहश्च नारसिंहोऽथ वामनः ।
रामो रामश्च कृष्णश्च बुद्धः कल्की च ते दशः ॥ १ ॥

मत्स्य १, कूर्म्म २, वाराह ३, नारसिंह ४, वामन ५, परशुराम ६, श्रीराम ७, कांन्ह गोकुली ८, बौद्धावतार ९, कलंकी १० इति दशावतारा वासुदेवस्य ।

CLOSING : बुद्धावतारः शीतलरूपः तेन म्लेच्छायतनं च वद्धये ॥९॥
अथ कल्क्यवतारमादाय म्लेच्छान् निर्घाटयिष्यति ॥१०॥

COLOPHON : इति श्रीदशावतारावतरणहेतुज्ञापनगाथार्थः ।

## 729. नासकेतोपाख्यानम् (सटीकम्)

OPENING : × × × × (वैशम्पा)यन उवाच—

श्लोक—शृणु राजन् कथां दिव्यां शुभां पौराणिकीं शुभाम् ।
यां श्रुत्वा सर्वपापेभ्यो मुच्यते नात्र संशयः ॥

**टीका**--हे राजा जनमेजय सुनि यह कथा सुभ पुराण मैं सुणी है । जा सुणे ते सर्व पाप मुच्यत हूहि तामैं संसै नहीं ।।६।।

CLOSING :

नासकेतमिदक्षाता मुद्दालकमुनीश्वरः ।
प्रात स्वयेक्षर येन न यमं न च किङ्कराः ।। ६२ ।।

**टीका**--हे राजा जनमेजै नासकेत अरु उद्दालक मुनि की यह कथा प्रात उठि एक अध्याय तथा एक श्लोक कि कथा अर्धश्लोक अथवा एक अक्षिर पढै ताकौं न जम को डरु न किकरनि को डरु । ६५।।

COLOPHON :

इति श्रीनासकेतोपाख्याने नासकेतरुषिसंवादे यमपुरीधर्माधर्मविचार शुभाशुभकृत जन्मनो नाम अष्टादशोध्याय समापत ।। १८ ।।

Post-Colophonic :

संवत सतरे अठ्यतरचौ, बार जु है गुरवार ।
सुकल पखि अरु सपतमी, लिख्यो ग्रंथ ततसार ।।

लिखत हरमांमध्ये गोरधनदास ।

## 753. षड्दर्शनसमुच्चयः

### 'तर्करहस्यदीपिका' टीकासहितः

Ct.-OPENING :

ॐ नमः सर्वज्ञाय ।

जयति विजितरागः केवलालोकशाली ,
सुरपतिकृतसेवः श्रीमहावीरदेवः ।
यदसमसमयाब्धेश्चारुगाम्भीर्यभाजः ,
सकलनयसमूहा बिन्दुभावं भजन्ते ।। १ ।।

× × × × × ×

नत्वा निजगुरून् भक्त्या षड्दर्शनसमुच्चये ।
टीकां संक्षेपतः कुर्वे स्वान्योपकृतिहेतवे ।। ४ ।।

इह हि जगति गरीयसश्चितवतां महतां परोपकारसम्पादनमेव सर्वोत्तमा स्वार्थसम्पत्तिरिति मत्वा परोपकारैकप्रवृत्तिसारश्चतुर्दशशतसंख्यशास्त्रविरचनाजनितजगज्जन्तूपकारः श्रीजिनशासनप्रभावनाप्रभाताविर्भावनभास्करो **याकिनीमहत्तरावचनानव** बोधलब्धबोधिबन्धुरो भगवान् **श्रीहरिभद्रसूरिः** षड्दर्शनीवाच्यस्वरूपं जिज्ञासूनां तत्तदीयग्रन्थविस्तरावधारणशक्तिविकलानां सकलानां विनेयानामनुग्रहविधित्सया स्वल्पग्रन्थं महार्थं सद्भूतनामान्वयं **षड्दर्शनसमुच्चय**शास्त्रं प्रारभमाणः शास्त्रारम्भे मङ्गलाभिधेययोः साक्षादभिधानाय सम्बन्धप्रयोजनयोश्च संसूचनाय प्रथमं श्लोकमेन माह--

सद्दर्शनं जिनं नत्वा वीरं स्याद्वाददेशिकम् ।
सर्वदर्शनवाच्योऽर्थः संक्षेपेण निगद्यते ।। १ ।।

CLOSING : & COLOPHON : इति श्री **तपागणनभोऽङ्गणदिनमणिश्रीदेवसुन्दरसूरिपदपद्मोपजीवि-श्रीगुणरत्न-**सूरिविरचितायां **तर्करहस्यदीपिकायां** षड्दर्शनसमुच्चयटीकायां जैमनीय-चार्वाकीयमत-स्वरूपनिर्णयो नाम षष्ठाधिकारः ।

तत्समाप्तौ च समाप्तेयं तर्करहस्यदीपिकानाम्नी षड्दर्शनसमुच्चयवृत्तिः ।

## 754. षड्दर्शनसमुच्चयः सटीकः

Ct.-OPENING

ॐ अर्हम् ।

CLOSING :

सज्ज्ञानदर्पणतले विमले त्रयस्य,
ये केचिदर्थनिवहाः प्रकटीबभूवुः ।
तेऽद्यापि भान्ति कलिकालजदोषभस्म-
प्रोद्दीपिता इव शिवाय स मेऽस्तु वीरः ॥१॥

जैनं यदेकमपि बोधविधायिवाक्य-
मेवं श्रुतिः फलवती भुवि येन चक्रे ।
चारित्रमाप्य वचनेन **महत्तरायाः**,
श्रीमान् स नन्दतु चिरं **हरिभद्रसूरि** ॥ २ ॥

सन्निधेहि तथा वाणीं षड्दर्शनाङ्कषड्भुजे ।
यथा षड्दर्शनव्यक्ति-स्पष्टने प्रभवाम्यहम् ॥ ३ ॥

व्यासं विहाय संक्षेपरुचिसत्वानुकम्पया ।
**टीका** विधीयते स्पष्टा **षड्दर्शनसमुच्चये** ॥ ४ ॥

इह हि श्रीजिनशासनप्रभावनाविर्भाविकप्रभोदयभूरियशाश्चतुर्दशशतपरिमाणपरि-भाषास्वरूपजिज्ञासुशिष्यहितहेतवे प्रकरणमारिप्सुमाणो निर्विघ्नशास्त्रपरिसमाप्त्यर्थं स्वपरश्रेयोऽर्थं च समुदितेष्टदेवतानमस्कारपूर्वकमभिधेयमाह-तथा— सद्दर्शनेति ।

CLOSING : & COLOPHON : तत्समाप्तौ च समाप्ता चेयं षड्दर्शनसमुच्चयसूत्रटीका ।

खेलताम् राजहंसौ यावद्विश्वसरस्तटे ।
तावद्बुधैर्वाच्यमाना टीकेयं नन्दताच्चिरम् ॥ १ ॥

सप्ताशीतिश्लोक-टीकामानं विनिश्चितम् ।
सहस्रमेकं द्विशती-पञ्चाशदनुष्टुभाम् ॥ २ ॥

अङ्कतोपि ग्रंथा० १३५२ शुभं भवतु ।

[वृत्तिकृत्प्रशस्तेरवशिष्टमंशं लेखनप्रशस्ति च संख्या ७५७ ग्रन्थ संख्या १५५१ प्रतौ ईदृग् वर्तते—]

श्रीरुद्रपल्लीयगणे गणेशः श्रीचन्द्रसूरिर्गुणराशिरासीत् ।
तद्बन्धुरिन्दुप्रभकीर्तिसूरिर्जीयाच्चिरं श्रीविमलेन्दुसूरिः ॥१॥
नन्दतु श्रीमुखः **श्रीगुणशेखरमुनीश्वरास्तदनु** ।
श्री**सिंहतिलकसूरि**स्तत्पट्टे जयतु चिरमधुना ॥ २ ॥

तत्पदपयोजभृङ्गो **विद्यातिलको** मुनिर्निजस्मृतये ।
**षड्दर्शनीयसूत्रे** चक्रे **विवृतिं** समासेन ।। ३ ।।
तदनुचितमौतात्र प्रमादतो मन्दमतिविमर्शाच्च ।
हृदयं विधाय मधुरं तत्स्वजनाः शोधयन्तु मयि ।। ४ ।।
वैक्रमेब्दे युग्मनन्दविश्वदेवप्रमाणिते १३९२ ।
**आदित्यवर्द्धनपुरे** शास्त्रमेतत् समर्थितम् ।। ५ ।।

Post-Colophonic : संवत् १५२३ वर्षे पोषमासे शुक्लेतरपक्षे ८ अष्टम्यां तिथौ भौमवासरे श्रीपत्तने श्रीपूर्णिमापक्षे श्रीजयप्रभसूरीश्वराणां शिष्येण मुनिना जसतिलकेन स्वाध्ययनाय परहिताय च षड्दर्शनसमुच्चयाख्यस्य ग्रन्थस्य टीका लिलेख लिखिता ।

## 759 तर्ककौमुदी

OPENING : श्रीगुरुभ्यो नमः । अर्हं । श्रीं नमः ।

श्रीवासुदेवं घननीलकान्तिं लक्ष्मीसमालिङ्गितहृत्प्रदेशम् ।
मत्स्यादिरूपैः कृतलोकतोषं विद्यानिदानं परमं नमामि ।। १ ।।
अक्षपादं मुनिं नत्वा काणादं च ततः परम् ।
लौगाक्षिणा **भास्करेण** तन्यते **तर्ककौमुदी** ।। २ ।।
यथा सिद्धान्तमुकरो द्रव्यादीनां निरूपणम् ।
विद्वद्भास्करशर्माऽयं बालव्युत्पत्तिसिद्धये ।। १ ।।

COLOPHON : इति श्रीमन्महामहोपाध्यायश्री**लौगाक्षिरुद्रकवीन्द्रात्मज**-विद्वन्**मुद्गलभट्ट**सूनुना **भास्करेण** विरचिता तर्ककौमुदी सम्पूर्णा समापिता ।

## 767. तर्कभाषा-'प्रकाशिका'-टीका

OPENING : (On f. 10) × × × × × × णाय । स्वपदमप्यन्यसमवेत । कार्यजनकं असंयोगाद्यतिव्याप्तिवारणाय । यावत्समवेतजनकत्वं कपालादौ नास्त्येव । कपालत्वादीनां नित्यत्वात् । यत्किञ्चिद्धर्मजनकेऽपि वक्तव्ये नित्यं यत्किञ्चिद्धर्ममादाय । स एव दोषः स्यात् । इत्यत उक्तं कायेति ।

CLOSING : अस्मिन्निति व्युत्पत्ता । पक्ष इत्यर्थः । पौनरुक्त्यादिदोषपरिहारायाख्याताय । वाह इहात्यंतमनुपयुक्तानां रूपभेदेन प्रतिपादनं । अनतिप्रयोजनानां वा लक्षणं न दोषायेति वस्तुतस्त्वयमर्थो बोध्यते । तथा न निःपद्यत उपयुक्तयेभ्यस्तान्यनुपयुक्तानि तेषां रूपभेदेन प्रकारभेदेन अनतिप्रयोजनानि न विद्यंते, अतिप्रयोजनं नात्यन्तप्रयोजनानि तेषां लक्षणा असाधारणधर्मनिर्वचन इति ।

COLOPHON : **श्रीमत्त्रिपाठी-विष्णुदासतनय-श्रीमद्बलभद्र**विरचिता **तर्कभाषाप्रकाशिका** समाप्ता ।

Post-Colophonic : संवत् १६०७ चैत्रशुदि ८ सोमे । म० हरिनाथसुत-नाकरेण लिखितमिदं तर्कभाषायाः टिप्पणकम् ।

## 769. तर्कवादः

OPENING : अथ तर्कवादः —

धर्मार्थं क्लिश्यते लोको न च धर्म्मः परीक्षितः ।
कृष्णं नीलं सितं रक्तं पीतं किं धर्म्मलक्षणम् ।। १ ।।

नास्ति धर्मः । इह हि किल केचिदहङ्का[ङ्का]रशिखरिशिखरमधिरूढाः कूर्चालसरस्वतीविरुदमात्मनः पाठयन्तः सुगल्लभल्लरीझात्कारेण विद्यानटीं नाटयन्तः सकलतार्किकचक्रचूडामणिमन्यमाना नास्तिप्रत्यक्षादिप्रमाणं पञ्चकातिक्रान्तित्वात् खरविषाणवत् ।

CLOSING : एके तु शीलधर्मप्रभावेन मुक्तिप्राप्ताः नारदऋषिवत् । एके तु तपोधर्मप्रभावाद् मोक्षं गता दृढप्रहारिवत् । एके तु भवनाधर्मप्रभावात् केवलज्ञानप्राप्य मुक्तिं प्राप्ता भरतेश्वरचक्रवर्त्तिवत् । एके तु क्षमाधर्मप्रभावाद् शिवं प्राप्ता कूरगडूवत् । इत्यादि आगमे धर्मो अनेकधा उक्तः । एवंविधो धर्मः यस्त्वया निषिद्धः तत् ज्ञातं भवतां पाण्डित्यं । अहो भवतां च चातुर्यं ज्ञातं भवन्त पण्डिता भासन्ति इति अस्तिपक्षः ।

COLOPHON : इति तर्कवादपत्रम् ।

Post-Colophonic : संवत् १८०६ वर्षे कातीवदि ५ दिने गुरुवारे पं० कुशलविमलेन लिपिकृताः ।

## 771. न्यायसार-टीका 'पदपञ्चिका'

OPENING : (On f. 2A) ×××××× संशय इति । तत्र तयोर्मध्ये अनवधारणञ्च तज्ज्ञानञ्चेति विग्रहः । न चावधारणाभाववाचकत्वात् अनवधारणशब्दस्य कथं ज्ञानशब्देन सामान्याधिकरण्यमिति वाच्यम् । तस्य अनिश्चयत्वजातिसहितव्यक्तिवाचकत्वात् । तस्यावान्तरजातिभेदमाह —

CLOSING : उपसंहरति । तस्मात् कृतकत्वेपि नित्सुखसंवेदनसम्बन्धस्य विनाशकारणाभावान्नित्यानं स्थितम् । तत् सिद्धमेतत् नित्यसंवेधमातसुखेन विशिष्ठा आत्यन्तिकीदुःखनिवृत्तिः । पुरुषस्य मोक्ष इतीति ।

COLOPHON : इति **काश्मीरसूर्यसूरिसूनु-श्रीवासुदेवसूरि**विरचितायां **पदपञ्चिकाया**मागमपरिच्छेदः समाप्तः ।

Post-Colophonic : संवत् १४९३ वर्षे । माघवदि १ सोमवासरे । चंदेरीस्थाने । लिखापितं वैद्यराज ठा० हरिगणसुत ठा० रविदासपुत्र गोसू । लखमणस्यार्थे । लिखितं कायस्थश्रीवास्तव श्रीसारंगसुत विश्वनाथतत्पुत्र घाटम लिखितम् ।

## 772. न्यायसार-टीका

(न्यायसार-विचारः)

OPENING : ॐ नमो भगवते नारायणाय ।

महादेवमहं वन्दे गुरुं सर्वज्ञमादरात् ।
ग्रंथग्रन्थिषु शैथिल्ये शक्तिर्यस्मादभवेन्मम । १।।

अथ ग्रन्थारम्भेऽभिमतग्रन्थपरिसमाप्त्यर्थं शिष्टाचारपरम्पराप्राप्ताभिमतदेवतानमस्कारकरणपूर्वकं ग्रन्थप्रतिपाद्यं प्रतिजानीते प्रणम्येत्यादिना श्लोकेन ।

(On f. 24)

व्याख्यातं यन्मया किञ्चित् पञ्चप्रस्थानसाक्षिकम् ।
तन्न्यूननमितो दोषान्न दूष्यं दोषदर्शिभिः ।।

इति श्रीसारङ्गसुत-**वादीन्द्र**शिष्य-न्यायनिपुणविचारचतुर**भट्टराघव**विरचिते **न्यायसारविचारे** प्रथमः परिच्छेदः समाप्तः ।

CLOSING :

तथा च सूत्रं अर्थापत्तितः प्रतिपक्षे सिद्धेरर्थापत्तिसम इति अस्य···र्थः । अर्थापत्तिता तदाभासात्प्रतिपक्षस्य साध्यभावस्य सिद्धेर्यत्प्रत्यवस्थानं सोऽर्थापत्तिसम इति । अथवानेकप्रकारः तथाहि शब्दोऽनित्य इत्युक्ते अर्थादापद्यते नान्योऽनित्य इति विशेषनिषेधविध्योः शेषविधिप्रतिषेधाभ्यनुज्ञाविषयत्वादितिन्यायादिति । तथा चाप्रसिद्धविशेषणत्वं शब्दादन्यस्यानित्यस्याप्रसिद्धेरिति । एवं ज्ञानकृतकत्वादनित्य इत्युक्तेऽथदि। ××××

## 774. मङ्गलवाद-सुखावबोधप्रश्नोत्तरपद्धतिः

OPENING :

ॐ ह्रीं श्रीं क्लीं ऐं श्रीपार्श्वनाथ नमः ।

ननु भो ये विशिष्टशिष्टा भवन्ति ते ग्रन्थारम्भे शिष्टसंकेतप्रतिपालनाय निर्विघ्नसमाप्त्यर्थं मङ्गलमाचरन्त्येव ततस्तकभाषाकारकः **केशवमिश्रो**पि शिष्टान्तःपाती वर्तते ततस्तेन कथं न मङ्गलमकारितराम् ? तत्रोच्यते —

CLOSING :

मङ्गलत्वं तु अत्र केवलं मङ्गले एव विद्यते । अतोऽनेकपदार्थघटितत्वाभावान्न सखंडोपाधिः नाप्यखण्डोपाधिः, अखण्डोपाधिर्जातितुल्यत्वे न पूर्वं निराकृतत्वात् तस्मान्मङ्गलत्वं किं ? तद्वाच्यम् । विपश्चिताऽत्रोच्यते– प्रतिबन्धकान्यस्य सतः प्रारिप्सितप्रतिबन्धनिवृत्त्यसाधारणत्वं मङ्गलत्वमिति लक्षणसद्भावात् मङ्गलत्वं सखण्डोपाधिरेव, इत्यलं विस्तरेण

COLOPHON :

इति श्रीमङ्गलवादसुखावबोधप्रश्नोत्तरपद्धतिः सम्पूर्णा ।

## 782. सप्तपदार्थी-टिप्पणम्

Ct.-OPENING :

ॐ नमः सर्वज्ञाय ।

ग्रन्थारम्भेऽभिमतदेवता नमस्क्रियन्त इति शिष्टसमाचारः । अतः प्रकरणं चिकीर्षुराचार्यश्चिकीर्षितस्य प्रकरणस्याविघ्नेन परिसमाप्ति (प्त्यै) शिष्यप्रशिष्यादिप्रचयपरिपन्थिकलमषनिवृत्तये शिष्टाचारपरिपालनाय च विशिष्टेष्टदेवतां नमस्यति । 'हेतव' इत्यादिना श्लोकेन ।

Ct.-CLOSING :

सप्तद्वीपा धरा यावदिति । यावत् इयं सप्तद्वीपा धरा विद्यते । यावत् सप्तधरामेव दि यो विद्यन्ते तावत्कालं इयं सप्तपदार्थी वस्तुप्रकाशिनी अस्तु-भूयात् ।

COLOPHON :

इति सप्तपदार्थीटिप्पणकं समाप्तमिति ।

Post-Colophonic :

संवत् १४८६ वर्षे प्रथम भाद्रवावदि १३ शनौ लिखितम् ।

## 783. सप्तपदार्थी सटीका (मितभाषिणी)

Ct.-OPENING :

ॐ नमः सर्वविदे ।

वेदान्तविज्ञानसुनिश्चितार्थैर्योगीश्वरैर्ध्येयमजं विशुद्धम् ।
उमामुमाभ्यामभिगम्यमानं वन्दे महेशं सदनुग्रहेशम् ।। १ ।।

विघ्नेशादीन्नमस्कृय **माधवाख्यसरस्वती** ।
**शिवादित्यकृतेष्टीकां** करोति **मितभाषिणीम्** ।। २ ।।

विशिष्टशिष्टाचारानुमितश्रुतिबोधितकर्त्तव्यातांकं कर्त्तव्यविघ्नान्तकं परमेश्वर-नमस्कारलक्षणं मङ्गलमाचरन् अर्थाद्विषयप्रयोजनादि दर्शयति—

हेतवे जगतामेव संसारार्णवसेतवे ।
प्रभवे सर्वविद्यानां शंभवे गुरवे नमः ।।

Ct.-CLOSING :

**गोराष्ट्रदेशोऽखिलराष्ट्रवर्यः** सदाकरो दक्षिणभूमितिष्ठः ।
विराजते सह्यगिरीन्द्रसानौ यशस्ति **गोकर्णमहाबलेशः** ।। १ ।।

तद्देशजन्मा यतिरेकदण्डी सरस्वतीमस्तक**माधवाख्यः** ।
सोऽयं शिवादित्यकृतेरकार्षीत् टीकामिमां बालसुखप्रवृत्त्यै । २ ।।

**माधवाख्ययतीन्द्रेण** **कृष्णातीरनिवासिना** ।
कृता **सप्तपदार्थ्यास्तु** टीकेयं **मितभाषिणी** ।। ३ ।।

COLOPHON :

इति श्रीपरमहंसपरिव्राऽजकाचार्य—श्रीमाधवसरस्वतीविरचितायां सप्तपदार्थीटीका सम्पूर्णः ।

## 786. सप्तपदार्थी-'संदर्भ टीका'

Ct.-OPENING :

ॐ श्रींनमो विघ्नराजाय ।

नत्वा ढण्ढिपदद्वन्द्वं सर्वकार्यार्थसिद्धये
अनल्पमतिसम्भूत्यै **बालभद्रः** समातनोत् ।। २ ।।

चिकीर्षितकर्मप्रतिबन्धकदुरितध्वंसकामो विशिष्टशिष्टाचाराऽनुमिताऽऽगमबोधित-कर्त्तव्यताकं स्तुतिनमस्काररूपं मङ्गलं कृत्वा शिष्यान् शिक्षयितुमादौ निबध्नाति-हेतव इति ।

Ct.-CLOSING :

श्रीवासुदेवपरायणश्री**विष्णुदासतनूजन्मबलभद्रमाध्वीपुत्रकृतः सन्दर्भः** समाप्तः ।

रमापतिपदद्वन्द्वसमर्पणपटीयसी ।
**बलभद्रकृती** रम्या वर्त्ततां विदुषां मुदे ।। १ ।।

COLOPHON :

इति श्रीसप्तपदार्थी नी टीका बली समाप्ताः ।

Post-Colophonic :

संवत् १५६१ वर्षे चैत्रमासे चतुर्थ्यां ४ तिथौ गुरुवासरे समाप्ताः । भट वेणी-दासेन स्वयं पठनार्थं लिखितं तथा पुत्र-पौत्र तथा परोपकार्थम ।।

## 807. पदार्थरत्नमञ्जूषा

OPENING :

.....................................

·······································वदनकुमुदोल्लासचतुरम् ।
घनस्वान्त ··························
·······································॥ १ ॥

·········रमारमणीयो यत्र चेन्दुरुदितो मुदिताशः ।
यत्र भूतिरुद·······································॥ २ ॥

·······························द्बोधकुसुमा हृदि परमा ।
सूक्तिविस्तृतिफला मम भवताद् विघ्न········का ॥ ३ ॥

मञ्जीराद्यैर्भूषणैर्भूषितायाः शश्वद्वि····· नकैः सेवितायाः ।
वन्दे वन्द्यं वेदवृन्दोदितायाः पारद्वन्द्वं रेणुकादेवतायाः ॥ ४ ।

·······गं परिघं दुरितानां चारुनखं सुमुखं सुकृतानाम् ।
साधु गृणामि कणादमुनीनां, भूधरजापतिजातमतीनाम् ॥ ५ ॥

भर··············सुग्रीवभृत्यं हरिबलकृतदुःखाम्भोधिसत्सेसुबन्धम् ।
हतखररिपुतर्गं सीतयालङ्कृताङ्कं गुरुवरमहमीशं नौमि रामाभि····॥ ६ ॥

× × × × × × × × × ×

अपास्तविस्तरां बाल-बोधवृद्धिप्रसाधिनीम् ।
**पदार्थरत्नमञ्जूषां** कुर्व्वे सर्वेष्टदायिनीम् ॥ १० ॥

CLOSING :

-विद्यागर्वाद्रिरूढातिचपलरस·············राल-
प्रोद्यत्पाखण्डदण्डार्दितजनचयदुर्वादिपञ्चाननेन ।
मञ्जूषा सत्पदार्थाऽमल··········· मितेयं ,
**कृष्णे**नाखर्व्वविद्वज्ज····················न ॥ १९ ॥

**पदार्थरत्नमञ्जूषाग्रन्थे** **कृष्ण**विनिर्मिते ।
निर्दोष-मोक्षवादोऽयं समा············· ॥ २० ॥

.....................................

······· - ·······युगल श्रीरेणुकासेविनि ।
पृथ्वीं शासति शार्ङ्गधारिततनु···········
·······································॥

## 811. सांख्यसूत्र-प्रदीपिका

OPENING :

श्रीगणेशाय नमः ।

पञ्चविंशतितत्त्वेषु जन्मना ज्ञानमाप्तवान् ।
आदिसृष्टौ नमस्तस्मै कपिलाय महर्षये ॥ १ ॥

अथातस्तत्त्वसमाससांख्यसूत्राणि व्याख्यास्यामः। इह हि कश्चिद् ब्राह्मणस्त्रिविधेन दुखेनाऽभिभूतः सांख्याचार्यं कपिलमहर्षि शरणमुपगतः। अथ कुलनामगोत्रस्वाध्यायं निवेद्याह भगवन्! किमिह परं किं याथातथ्यं किं कृत्वा कृतकृत्यः स्यामिति।

CLOSING : एतन्महर्षेविज्ञानं कपिलस्य महात्मनः।
यच्छ्रुत्वा ब्राह्मणः श्रेष्ठः कृतकृत्यो भवेत्सदा॥
सांख्यसूत्रक्रमेणैषा व्याख्याता कर्मदीपिका।
अनुष्टुबुछन्दसामत्र ज्ञेयं श्लोकशतत्रयम्॥

COLOPHON : इति सांख्यसूत्रप्रदीपिका समाप्ता।

Post-Colophonic : संवति १८५९ वर्षे आषाढवदित्रयोदश्यां लिपीकृते त्रवाडी दुर्लभेत्याह्वयेन। लिखाविता पं० राजकुशलजी।

## 816. योगशास्त्रान्तरश्लोकाः

OPENING : नमोऽर्हदादिभ्यः।

श्रीयोगशास्त्रस्यान्तरश्लोकाः। सनत्कुमारभावनामाहुः—

अचिंतयच्च धिगिदं सदा गदपदं वपुः।
मुधैव मुग्धाः कुर्वन्ति तन्मूर्छां त्रस्तबुद्धयः॥ १॥
शरीरमन्तरुत्पन्नैर्व्याधिभिर्विविधैरिदम्।
दीर्यते दारुणैर्दारु दारुकीटगणैरिव ॥ २॥

CLOSING : सम्प्राप्तबोधयो जीवा न रज्यन्ते भवे क्वचित्।
निर्ममत्वाद् भवन्त्येके मुक्तिमार्गमनर्गलम्॥ ७०॥
ये प्राप्ताः परमं पदं तदपरे प्राप्स्यन्ति ये केऽपि वा,
ये वा केचिदवाप्नुवन्ति विकसन् पुण्यर्द्धयः सम्प्रति।
सर्वेऽप्यप्रतिमप्रभावविभवां बोधिः समासाद्यते,
तस्माद् बोधिरुपास्यतां किमपरं संस्तूयतां स्तूयताम्॥७१॥

COLOPHON : इति अन्तरश्लोकाः। ९००।

## 817. योगसारः सस्तबकः

W-OPENING : ॐ नमः परमात्मने।

णिम्मलज्झाणपरठिया, कम्मकलंक डहेवि।
अप्पा लद्धओ जेण परु, ते परमप्पण वेवि॥ १॥

Ct.-OPENING : चिदानन्दस्वरूपाय रूपातीताय (?) ताने।
परमज्योतिषे तस्मै नमः श्रीपरमात्मने॥ १॥

हवें परमात्मा केहवा छे तत्स्वरूपमाह्—निरमल ध्यान करवानें विषें थि करवानें अर्थे कर्म्मरूप जे कलंक मेल तेहनें ध्यानरूपी अग्नी दहीनें बालीनें जेणें परमात्मा लाधो केहतां आत्मानो स्वरूप प्रत्यक्ष अनुभव्यो। ते परमात्मा परमेश्वरनें नमस्कार करीनें आत्मा ना प्रतिबोधनें अर्थें वेहा कहिस्युं ॥ १ ॥

W.-CLOSING :

संसारह भयभियएहि, **योगचंदमुणिएणं।**
अप्पा-संवोहण-कथा, दोहा इक्क मणेणं ॥ १०८ ॥

Ct.-CLOSING :

संसार चतुर्गति भ्रमण रूप जे भय तेह थकी बीहतो, अष्टांगयोगनिर्मल चन्द्रनें परें एहवो योगीन्द्रदेव मुनी छे तेणें। आत्मानें संबोधे प्रतिबोधवा काजें। ए दूहानें बंधें एक मनें थई कीधा दोहा नांम छंद सहित कीधा ॥ १०८ ॥

COLOPHON :

इति **श्रीयोगीन्द्रदेवमुनिकृत-योगसारशास्त्र** अध्यात्मकथानक सम्पूर्णम्।

Post-Colophonic :

संवत् १८६४ ना चैत्रशुद्धष्टम्यां लिखिता प्रतिरियं। पं० प्र० मुनिना रत्नचन्द्रेण श्रीधर्म्मजिनप्रसादात्। श्री श्रीराधनपुरनगरे।

## 824. अष्टावक्रः

OPENING :

श्रीगणेशाय नमः।

अथ अष्टावक्र लिख्यते। शिष्य उवाच—

**श्लोक**– कथं ज्ञानमवाप्नोति कथं मुक्तिर्भविष्यति।
वैराग्यं च कथं प्राप्तं एतत् त्वं ब्रूहि मे प्रभो ॥ १ ॥

अष्टावक्र उवाच —

मुक्तिमिच्छसि चेत्तात विषयान् विषवत् त्यज।
क्षमार्जवदयातोषसत्यं पीयूषवद् भज ॥ २ ॥

CLOSING :

विंशत्येकमितैः खण्डैः श्लोकैरात्माग्निमध्यखैः।
अवधूतानुभूतेश्च श्लोकाः संख्याक्रमा अमी ॥ ६ ॥

COLOPHON :

इति श्री**अष्टावक्रे** (श्री) मद्**विश्वेश्वर**विरचितायां संख्याक्रमव्याख्याने एकविंशति प्रकरणं समाप्तम्।

## 829. आत्मबोधः 'मनभावती' टीकासहित

श्रीगणेशाय नमः।

Ct.-OPENING :

आत्मबोध सटीक।

**दोहा**– मंद मुमुक्षु देखि पुनः, दया भइ मन मांहि।
भाषा करवे काम एहि, हेतु और कछु नांहि ॥ १ ॥

**आत्मबोध** विचार अस, टीका सुगम प्रकार।
**मुक्त**कवि भाषा करी, अन्वय पद अनुसार ॥ २ ॥

स्लोक– तपोभिः क्षीणपापानां शान्तानां वीतरागिणाम् ।
मुमुक्षूणामपेक्ष्यो यमात्मबोध विधीयते ।। २ ।

Ct.-CLOSING :

दोहा– किया प्रेरण संत इक, पूर्णानंद तिह नाम ।
टीका आत्मबोधकी, हम चाहत निस जाम ।। १ ।।

दोहा– दया करी जब संतने, मुक्त कवी अन नाम ।
टीका करो मनभावनी, सबके पूरण काम ।। २ ।।

याको करे विचार जो, वार वार चित लाय ।
बोध होत तिह कालहि, संशय चित को जाय ।। ३ ।।

COLOPHON :

इति श्रीमत्शंकराचार्यविरचिते आत्मबोधग्रन्थभाषाटीका मनभावनी नाम[मु]क्तानन्दपरमहंसेन विरचिता सम्पूर्णं समाप्तं ।

## 844. पञ्चीकरण-वार्तिकम्

OPENING :

श्रीपरमात्मने नमः ।

ओंकारः सर्ववेदानां सारस्तत्त्वप्रकाशकः ।
तेन चित्तसमाधानं मुमुक्षूणां प्रजायते ।। १ ।।

आसीदेकं परं ब्रह्म नित्यमुक्तमविक्रियम् ।
तस्य मायासमावेशाद् बीजमव्याकृतात्मकम् ।। २ ।।

CLOSING :

प्रज्ञानघनमानन्दं वैष्णवं पदमश्नुते ।
इदं प्रकरणं यत्नाद् ज्ञातव्यं भगवत्तमैः ।। ६१ ।।

अमानित्वादिभिर्यतै[त्नै] र्गुरुभक्तिप्रसादतः ।
इमां विद्यां प्रयत्नेन योगी सन्ध्यासु सर्वदा ।। ६२ ।।

समभ्यसेदिहाऽमुत्र भोगी नासक्तधीः सुधीः ।
रागद्वेषादिरहितः स्वात्मानं चिन्तयेत् सदा ।। ६३ ।।

COLOPHON :

इति श्रीपञ्चीकरणवार्त्तिकं सम्पूर्णम् ।

## 844. षट्श्लोकी

कोऽहं स्वामिन् ! ब्रूहि यथार्थं शृणु साधो,
लक्ष्ये सम्यक् सोऽसि परस्त्वं परमात्मा ।
सत्यज्ञानानन्दतया यः श्रुतिमूर्ध्नि,
प्रादुर्भूतः सर्वजनान् सृष्टृतया च ।। १ ।।

नेत्यात्मानं वेद्मि परात्म-प्रतिरोधात्,
प्रादुर्भूतम् भावविरुद्धं नुद विद्वन् ।
सत्यं सत्यं सम्प्रति साधो यदवोचः,
प्रत्युत्पन्नं भावविरोधं प्रतिरोत्स्ये ।। २ ।।

सोऽयं विद्वानित्यवबोधस्तव यद् शं,
कालं चापि विरुद्धं प्रविहाय ।
तद्वत्कर्तृत्वादिविरुद्धं यदहासीत् तत्,
त्यक्त्वा सर्वं यत् सदसि त्वं परिशिष्टम् ॥ ३ ॥
स्वामिन् ! नाथ त्वत्पदपङ्केरुहरेणु-
स्पर्शोद्धूताशेषकषायः करुणात्मन् ।
सम्यग्ज्ञानापास्तसमस्तस्थिरमोहः,
प्रादुर्भूतब्रह्मसुखैकास्पदभूतः ॥ ४ ॥
नाहं कर्त्ता कारयिता वा न च कार्यं,
नाहं भोक्ता भोजयिता वा न च भोज्यम् ।
नाहं दुःखी दुःखयिता वा न च दुःखं,
सोऽहं प्रत्यक् च सुखरूपः परमात्मा ॥ ५ ॥
मिथ्यैवायं रज्जुभुजङ्ग[ः]प्रतनास्ती-
त्यतिरूपः कृत्स्नो लोकः कल्पते ।
एवात्मविमोहात् यस्मात्तस्मात् विस्मृतिहेतु-
विपदादिः सत्यमभ्युपगन्तुं प्रभवामि ॥ ६ ॥

षट्श्लोकी-प्रकरणं सम्पूर्णम् ।

## 846. पदार्थतत्त्वविवेकप्रकरणम्

OPENING :

श्रीगणेशाय नमः

सम्प्रदायो गुरुशिष्यपरम्पराध्ययनमुत्सृष्टिरेव किं न स्यात्तत्राह-अनादीति, कर्मणां प्रवर्त्तनं सतामनुष्ठापनमुक्तं सर्वेषामित्यत्र कर्मणा सृष्टिरेवोक्तिभेदः, संस्थाशब्दो रूप-भेदग्राही अस्मादिषु घटाद्युत्पत्तेः शब्दपूर्वकत्वं प्रात्यक्ष्याज्जगतोऽपि सृष्टेस्तत्पूर्वकत्व-मनुमेयमिति प्रत्यक्षानुमानाभ्यामित्यत्रार्थान्तरमाह—अपि चेति ।

CLOSING :

योंतर्यामितया ममेन्द्रियतनुप्राणा [न्]नियुंक्ते सदा ,
जीवेनेह मदात्मना च विषयानतीव कुर्वन् क्रियाः ।
जाग्रत्स्वप्नसुषुप्तिमूर्च्छितलसल्लीला मदीयाः स्वयं,
साक्षादीक्षित एव विद्वन् [द्] वपू रामाभिधः सोऽस्म्यहम् ॥

COLOPHON :

इति श्रीपदार्थतत्त्वविवेको नाम प्रकरणम् समाप्तम् ।

Post-Colophonic :

ज्ञाति ब्राह्मण साचोरा शास्त्रि श्रीरजरामसूनुना आनन्दरामेण लिखितं स्वपठनार्थं परोपकारार्थम् ।

## 849. महावाक्यादर्शः

OPENING :

·········त्मने नमः ।

नमः कारणदेहाय ब्रह्मणेऽद्भुतकर्मणा ।
गोकुले वसता येन दुष्टानां विग्रहः कृतः ॥

तत्त्वमसीति महावा······विरच्यते। प्रथमं परमेश्वरार्पणबुद्ध्या नित्यादिकर्म कुर्वतः पुरुषस्यान्तःकरणशुद्धिद्वारा विविदिषोत्पद्यते। धर्मेण पापमपनुदति। तमेतं वेदानुवचनेनेति श्रुतेः। ततोऽनन्तरं विवेक उत्पद्यते, ब्रह्म नित्यं जगदनित्यमिति। अनित्यत्वदोषदर्शनाद् विषयेषु वैराग्यं ततः शमदमादिसाधनषट्कसम्पत्तिः। ततो मुमुक्षा उत्तरोत्तरं प्रतिपूर्वपूर्वस्य कारणत्वात्। पश्चात् संसाराभितप्तः सन् गुरुमुपसर्पति, तद् विज्ञानार्थं स गुरुमेवाभिगच्छेत् श्रोत्रियं ब्रह्मनिष्ठमिति श्रुतेः। ततः कारुणिकत्वाद् गुरुः शिष्यं उपदिशति—महावाक्येन अयमर्थः।

CLOSING : उपसंहारेपि पुरुषैकत्वस्योपसंहारात् तमा(स्मा)दयमर्थः प्रकृतिस्थ इति माया-तादात्म्यापन्नः सन् संसारमुपलभते उपद्रष्टेति च पुरुषः पर इत्यत्र प्रकृतेरिति पदाधा (ध्या)हारो(रः)कर्त्तव्यः। तथा चास्मिन् प्रकृतिपरिणामे देहजीवरूपेण वर्त्तमानोऽपि प्रकृतिगुणासंसृष्टः सन् परमार्थतोसंसारी स्वेन रूपेणेत्यर्थः। तस्माद्ध [स]जीवपरयोरैक्यमिति।

COLOPHON : इति व्यव. जगन्नाथपुत्रे जेरामजीविरजिते महावाक्यादर्श समाप्तः।

Post-Colophonic : संवत् १७५६ वर्षे शाके १६२२ प्रवर्त्तमाने वैशाखशुदि १ भौमवासरे पंड्या गणेशसुत त्र्यम्बिकेन श्रीपत्तननगरे लिखितं इदं पुस्तिकम्।

## 850. रामोत्तरतापिनी दीपिका

OPENING : ॐ श्रीगणेशाय नमः।

ॐ। रामोत्तरतापनीयं स्वरूपमहिमोक्तये।
रामचन्द्रस्य षड्विंश-खण्डपञ्चकमण्डितम्॥

पूर्वतापनीये राममन्त्रा यन्त्रपीठपूजा च सविधानेनोक्ता, मध्ये तारद्वयं लिखेत्, तत्सर्वं प्रणवाभ्यां च वेष्टयेत् इति।

CLOSING : समाप्त्यर्था उक्तमेव। पुनरुच्यत—उत्तरग्रन्थाभावादिति हि द्विरुक्त्या सूच्यते-उत्तरं च तत् तापनीयं च तपनादामतं तापनीयं वेणुकादित्वातच्छणशैषिकः।

नारायणेन रचिता श्रुतिमात्रोपजीविना।
अस्पष्टपदवाक्यानां रामोत्तरप्रदीपिका॥

COLOPHON : रामउत्तरतापनी-दीपिका समाप्तः।

## 855. शङ्कराचार्य-धर्मराजसंवादः

OPENING : ॐ नमः।

श्रीशङ्कराचार्य उवाच—

गच्छ गच्छाऽग्रतो दूरं जात्याधम हि साम्प्रतम्।
तव छाया पतत्येषा सतां मार्गविरोधिनी॥ १॥

चाण्डाल उवाच—

अन्नमयादन्नमयमथवा चैतन्यमेव चैतन्यात् ।
द्विजवर दूरीकर्तुं वाञ्छसि किं ब्रूहि गच्छ गच्छेति ॥ १ ॥

CLOSING : यत्सौख्याम्बुधिलेशलेशत इमे शक्रादयो निर्वृता,
यच्चित्ते नितरां प्रशान्तकलना लब्धा मुनिर्निर्वृतो(तौ) ।
यस्मिन्नित्यसुखाम्बुधौ गलितधीर्ब्रह्मैव स ब्रह्मविद्,
यः कश्चिच्च सुरेन्द्रवन्दितपदो नूनं मनीषा मम ॥ ८ ॥

COLOPHON : इति शङ्कराचार्य-धर्मराजसम्वाद-सम्पूर्णम् ।

## 858. हस्तामलकः सटीकः

W.-OPENING : यस्मिन् ज्ञाने जगत्सर्वं विज्ञातं परमात्मनि ।
तं वन्दे नित्यविज्ञानमानन्दमजमव्ययम् ॥ १ ॥

शंकर उवाच—

कस्त्वं शिशो कस्य कुतोऽसि गन्ता किं नाम ते त्वं कुत आगतोसि ।
एतन्मयोक्तं वद चार्भक त्वं मत्प्रीतये प्रीतिविवर्द्धनोसि ॥ २ ॥

Ct.-OPENING : श्रीः । कस्त्वं इति स्पष्टार्थः । मन आदीनां मनश्चित्ताहङ्कारबुद्धीनां चतुर्णां अन्तःकरणानां तथा चक्षुरादीनां चक्षुत्वक्श्रोत्रजिह्वानाशिकानां पञ्चबुद्धीन्द्रियाणां तथा वाक्पाणिपादपायूपस्थानां पञ्चकर्मेन्द्रियाणां प्रवृत्तौ स्वरूपव्यापारे निमित्तं हेतुर्यः सोऽहमात्मेति सम्बन्धः, नित्योपलब्धिस्वरूपोऽहं यस्य तथोक्तः ।

W.-CLOSING : उपाधौ यथा भेदता सन्मणीनां तथा भेदता बुद्धिभेदेषु तेऽपि ।
यथा चन्द्रकाणां जले चञ्चलत्वं तथा बुद्धिभेदात्तवापीह विष्णो ॥ १५ ॥

Ct.-CLOSING : उपाधाविति । उपाधौ यथा भेद एव भेदता स्वार्थे तल्, सन्मणीनां स्फटिकादीनां लोहितकृष्णादिभेदेन भेदिता भेदः तथा बुद्धिभेदेषु तवापीह विष्णो परमार्थतस्तु भेदो नास्त्येव । नानाबुद्धौ सत्यां तु भवत्येवेत्यर्थः । यथा चन्द्रिकाणां चन्द्र एव चन्द्रिका स्वार्थे कः, प्रतिबिम्बे दृश्यमानानां जलस्य चञ्चलत्वादेव तेषां चञ्चलत्वं, तथा बुद्धीनां चञ्चलत्वात् तवाऽपि चञ्चलत्वं औपाधिकं कंपनन्न (?कथन्न) पारमार्थिकम् । इह बुद्धिषु हे विष्णो इति ॥ १५ ॥

COLOPHON : इति **हस्तामलकस्य टीका सुबोधिनी** सम्पूर्णा ।

Post-Colophonic : १७५३ जल्लालपुरे ।
जल्लालनगरे रम्ये निचिते नागरैर्वरैः ।
तत्रेयं लिखिता टीका **शुद्धबोधप्रकाशिका** ॥ १ ॥

## 860. हस्तामलक-संवादः

OPENING : श्रीगणेशाय नमः

अथ श्रीशङ्कराचार्यो बालं पप्रच्छ यत्नतः ।
कस्त्वं शिशो किमर्थं वा जड(त्वं)वर्द्धसे वद ॥ १ ॥

इति श्रुत्वा वचो भाष्यकारस्य मनसा शिशुः ।
तं स विज्ञाय सर्वज्ञं सर्वब्रह्मविदां वरम् ।। २ ।।

CLOSING : यमाहुर्वेदान्ताः परममपदमीशोऽपि वचनै—
रखण्डं ब्रह्माख्यं विधिमखनिषेधैरविरतः ।
स एवाहं बालो विधिहरिहरात्मातिविमलो,
निजानन्दे क्रीडे विगतकलनो भ्रान्तिरहितः ।। १४ ।।

COLOPHON : इति भावार्थकैः श्लोकैर्मुनिर्द्वादशभिः स्वयम् ।
स्वतत्त्वं वर्णयामास हस्तामलकसंख्यकैः ।। १५ ।।
इति श्रीमच्छङ्कराचार्यविरचितं हस्तामलकसंवाद सम्पूर्णम् ।

## 863. ब्रह्मसंहिता

OPENING : श्रीराधागोविन्ददेवौ जयतः ।
ईश्वरः परमः कृष्णः सच्चिदानन्दविग्रहः ।
अनादिरादिर्गोविन्दः सर्वकारणकारणम् ।। १ ।।
सहस्रपत्रं कमलं गोकुलाख्यं महत्पदम् ।।
तत् कर्णिकारं तद्धाम तदनन्तांशसम्भव ।। २ ।।

(On f. 4) संस्कृतश्चादिगुरुणा द्विजत्वं अगमत्ततः ।
त्रय्या प्रबुद्धोथ विधिर्विज्ञातस्तत्त्वसागरः ।। ३६ ।।
तुष्टा च वेदसारेण स्तोत्रेणानेन केशवम् ।
ब्रह्मोवाच—
चिन्तामणिप्रकरसप्तसुकल्पवृक्षः लक्षावृतेषु सुरभीरभिपालयन्तम् ।
लक्ष्मीसहस्रशतसम्भ्रमसेव्यमानं गोविन्दमादिपुरुषं तमहं भजामि ।। १ ।।

CLOSING : अहं हि विश्वस्य चराचरस्य बीजं प्रधानं प्रकृतिः पुमांश्च ।
मया हि तं तेज इदं बिभर्षि विधे विधेहि त्वमथो जगन्ति ।। ३६ ।।

COLOPHON : इति श्रीब्रह्मसंहितायां भगवत्सिद्धान्तसंग्रहे मूलसूत्राख्यं पञ्चमोऽध्यायः ।। ५ ।।
इति ब्रह्मसंहिता सम्पूर्णम् ।

Post-Colophonic : मिति आषाढशुक्ल ६ रविवासरे लिखितं इदं पुस्तकम् ।

## 888. चतुःशरण-प्रकीर्णकं 'सबालावबोधम्'

OPENING : ऐं नमः ।
मंगलीक भणी षट्विध आवश्यक कवि बोलइ छइ—
सावज्जजोगविरई उक्कित्तणं गुणवओ अ पडिवित्ती ।
खलिअस्स निंदणावण तिगिच्छ गुणधारणा चेव ।। १ ।।

CLOSING : & COLOPHON :

ए गाथामध्ये वीरभद्र एहवुं पद कहतां ग्रन्थकारइं पोतानुं नाम जणाव एतलइं वीरभद्र एहवइ नामइं जे प्रत्येकबुद्ध साधु महावीर नइ वारइ हुउ तेहनुं ए पयन्नुं जाणवुं ।

इति श्रीचउसरणपयन्ना बालावबोधलेशः पूर्वाचार्यकृतावचूरितो लिखितः ।

शास्त्रारविन्ददिनकरवाचककल्याणविजयशिष्येण ।
वाचकधनविजयेन, प्राकृत-विवृतिर्विरचिताऽस्य ॥ १ ॥

Post-Colophonic : महोपाध्याय श्री ५ श्री श्री श्री श्री श्री धनविजयगणिशिष्य म वीरवि लिखितम् ।

## 889. चतुःशरणप्रकीर्णकम् (सबालावबोधम्)

OPENING : श्रीविघ्नहर्त्रे नमः । श्रीं ।

पहिलउं आवश्यक ना नांम पहिली गाथायं कहीइं—

सावज्ज जोगविरई, उक्कित्तण गुणवओ अ पडिपत्ती ।
खलिअस्स निंदणा वण-विगिच्छ गुणधारणा चेव ॥ १ ॥

× × × × × × × × × × ×

CLOSING : इय जीव पमायमहारि वीरभद्दं तमेवमज्झयणं ।
झाएसु तिसंझमवंझं कारणं निव्वुइसुहाणं ॥ ६३ ॥

× × × × × × × × × ×

COLOPHON : इति श्री चउसरणनु बालावबोध सम्पूर्णः ।

Post-Colophonic : संवत् १७१९ वर्षे ज्येष्ठसुदि ५ रविवासरे श्री अंचलगच्छे ।

## 929. अजितशान्तिस्तवः सस्तबकः

OPENING : अजियं जियसव्वभयं संतिं च पसंत सव्वगयपावं ।
जय गुरु संति गुणाकरे दो वि जिणवरे पणवयामि ॥ १ ॥

× × × × × × × × × × ×

CLOSING : जय इच्छह परमपयं अहवा कित्ती सुवित्थडा भुवणे ।
ता तयलुक्कद्धरणे जिणवयणे आयरं कुणह ॥ ४४ ॥

COLOPHON : इति श्री अजितशान्तिस्तवन-टबार्थ समाप्तम् ।

Post-Colophonic : लिखितं पंडित-श्रीहर्षमेरुगणि संवत् १६८८ वर्षे भाद्रपदसुदि ९ गुरौ नव्य नगरमध्ये ।

## 1037. धर्मपरीक्षा

OPENING

श्रीमान्नभस्वस्त्ययतुङ्गशालं जगद्गृहं बोधमयप्रदीपः ।
समन्ततो द्योतयते यदीयो भवन्तु ते तीर्थकराः श्रिये नः ॥ १ ॥

कर्मक्षयानन्तरमर्चनीयं विविक्तमात्मानमवाप्य पूतः ।
त्रैलोक्यचूडामणयो बभूवुः भवन्तु मुक्ता मम युक्तये ते ॥ २ ॥

CLOSING :

सिद्धान्तपाथोनिधिपारगामी **श्रीवीरसेनो**ऽजनि सूरिवर्यः ।
श्रीमाथुराणां यमिनां वरिष्ठः कषायविध्वंसविधौपदिष्टः ॥ १ ॥

ध्वस्ताशेषध्वान्तवृत्तिर्महस्वी तस्मात्सूरि**र्देवसेनो**ऽजनिष्ट ।
लोकोद्योती पूर्वशैलादिवार्कः शिष्टाभीष्टः स्थेयसोऽपास्तदोषः ॥ २ ॥

भाषिताऽखिलपदार्थसमूहो निर्मलो**ऽमितगति**र्गणनाथः ।
वासरो दिनमणेरिव तस्माज्जायते स्म कमलाकरबोधी ॥ ३ ॥

**नेमिषेण**गणनायकस्ततः पावनं वृषमधिश्रितो विभुः ।
पार्वतीपतिरिवास्तमन्मथो योगगोपनपरो गणार्चितः ॥ ४ ॥

कोपनिवारी शमदमधारी माधवसेनः प्रणतरसेनः ।
सोऽभवदस्माद्‌गलितमदस्मा यो यतिसारः प्रशमितसारः ॥ ५ ॥

**धर्मपरीक्षा**मकृत वरेण्यां धर्मपरीक्षामखिलशरेण्याम् ।
शिष्यवरिष्ठो**ऽमितगति**नामा तस्य पटिष्ठोऽनघमतिधामा ॥ ६ ॥

बद्धं मया जडधियाऽत्र विरोधि यत् तत् ,
गृह्णन्त्विदं स्वपरशास्त्रविदो विशोध्य ।
गृह्णन्ति किन्तु यमपास्य न सस्यजातं ,
सारं निसारभिदमद्य धियो विबुध्य ॥ ७ ॥

× × ×

संवत्सराणां विगते सहस्रे ससप्तौ विक्रमपार्थिवस्य ।
इदं निषेधान्यमतं समाप्तं जिनेन्द्रधर्मामितियुक्तिशास्त्रम् ॥ २० ॥

COLOPHON : इति श्रीधर्मपरीक्षायां अमितगतिकृतायां एकविंशतितमः परिच्छेदः ॥ २१ ॥

इति धर्मपरीक्षा समाप्ता ।

Post-Colophonic : सं० १८८६ वर्षे मिति ज्येष्ठमासे शुक्लपक्षे ४ तिथौ शनिवारे । मुनिः लि० उदैसागरेण । पगार्द्धम् । × × × ×
श्रीनानागोरनगरे श्रीतपागच्छैः ।

## 1039. पट्टावली सटीका

OPENING : तपागच्छाधिराज श्री ५ श्री हीरविजयसूरिगुरुभ्यो नमः ।

अथ गुरुपरिपाटीकथनाय सङ्गतिमाह—

सिरिमंतो सुहहेऊ गुरुपरिवाडीइ आगओ संतो ।
पज्जोसवणा कप्पो वाइज्जइ ते तं वुच्छं ॥ १ ॥

**व्याख्या**—सिरिमंतोत्ति । यत्तदोर्नित्याभिसम्बन्धात् येन कारणेन श्रीमान् सश्रीकः श्रियां मन्त्रणा वा पर्युषणाकल्पो गुरुपरिज्ञा समागतः सन् वाच्यते । उप

लक्षणात् श्रूयते च । किंलक्षणः शुभहेतुः स्वर्गापवर्गकारणं तेन कारणेनाहं तां गुरु-परिपाटीं वक्ष्ये इत्यन्यः ।

CLOSING :

सिरिविजयसेणसूरि-प्पमुहेहिं णेगसाहुवग्गेहिं ।
परिकलिआ पुहवीए विहरंता दितु मे भद्दं ॥ २० ॥
पट्टपरंपर एणं, वायगसिरिधम्मसागरगुरुहिं ।
परिसंखा या सिरिमंत सूरिणो दितु सिद्धिसुहं ॥ २१ ॥
इयं गाथा शिष्यकृता ।

सिरि त्ति । व्याख्या—ते च श्रीहीरविजयसूरयः सम्प्रति श्री विजयसेनसूरि-प्रभृत्यनेकसाधुभिः परिकलिताः पृथ्वीतले विहारं कुर्वाणा मे मम भद्रं यच्छन्तु ॥२०॥

COLOPHON :

इति महोपाध्यायश्रीधर्मसागरगणिविरचिता श्री**तपागच्छपट्टावलीसूत्रवृत्तिः** समाप्ता ।

श्री**हीरविजयसूरीणां** निदेशात् उपाध्याय श्री**विमलहर्ष**गणि उपाध्याय श्री **कल्याणविजय**गणि उपाध्याय श्री **सोमविजय**गणि पं० **लब्धिसागर**गणि प्रमुखगीतार्थैः सम्भूत १६४६ वर्षे चैत्रबहुलषष्ठी शुक्रे **अहम्मदावादनगरे** श्री**मुनिसुन्दरसूरि**कृत गुर्वावली जीर्णपट्टावली दुःखमासंघस्तोत्रयन्त्राद्यनुसारेण संशोधिता । अथापि यत् किञ्चित् शोधनार्हं भवति तन्मध्यस्थगीतार्थैः संशोध्य किञ्चास्याः पट्टावल्याः शोधनात् प्राग् बहव आदर्शाः सञ्जाताः सन्ति ते च अस्योपरि संशोध्य वाचनया नत्वन्यथेति, श्रीमत्परमगुरूणामनुशिष्टिरिति । वाचकशिरोऽवतंस सश्रीमत् **कल्याणविजयगणिशिष्यः** प्रथमादर्शं सम्यग् विचार्य । इति श्रीगुर्वावलिवृत्तिः सम्पूर्णा ।

Post-Colophonic :

संवत् १७३२ वर्षे आसोजशुदिविजयदशम्यां श्रीउदयपुरे लिखिता । पण्डित श्री-रंगविजय ग० शिष्य पं० मतिविजय ग० लिखितं । स्ववाचनाय ।

## 1062. शीलोपदेशमाला सटीका (शीलतरङ्गिणी)

OPENING :

ॐ नमो जिनाय ।

यस्योपदेशसमये दशनांशुमिश्राः स्कन्धोपरिप्रसृमराश्चिकुरप्ररोहाः ।
कल्याणपात्रदधिसंवलितोरुदूर्वालीलां दधुः स कुशलाय युगादिदेवः ॥ १

× × × × × × × × × ×

चक्रे पुरा यज्जय**सिंहसूरि**-शिष्येण शास्त्रं **जयकीर्ति**नाम्ना ।
तस्याहमासूत्रयिताऽस्मि वृत्तिं सुखावबोधां स्वपरोपकृत्यै ॥ ७ ॥

इह हि प्रकरणकारः प्रगुणिततत्त्वोपदेशसुधासारः पुण्यवल्लरीपल्लवोल्लासवर्षारम्भे श्रीशीलोपदेशमालाख्यप्रकरणप्रारम्भे सारेतरविचारणप्रवणचतुरचेतश्चमत्कृतये प्रेक्षावत्प्रवृत्तये विघ्नविनायकोपशमनाय च समुचितेष्टदेवतानमस्कारपूर्वकमभिधेयप्रयोजन-सम्बन्धबन्धुरां प्रथमगाथामाह—

आबालबंभयारिं नेमिकुमारं नमित्तु जयसारं ।
सीलोवएसमालं वुच्छामि विवेककरिसालं ॥ १ ॥

CLOSING : & COLOPHON : इति **श्रीशीलोपदेशमालावृत्तौ** श्रीसङ्घतिलकसूरिशिष्यविद्यातिलकविरचितायां धनश्रीमहासती-कथा ।

अथ ग्रन्थसमाप्तौ स्वनामगर्भं मङ्गलं शिष्यमाह—

इय **जयसिंहमुणीसर** विणेय **जयकित्तिणा** कयं एयं ।
**सीलोवएसमालं** आराहिय लह बोहिबलं ॥ ११४ ॥

इति पूर्वोक्तप्रकारेण श्रीजयसिंहमुनीश्वर(विनेय) जयकीर्तिना कृता एनां शीलोपदेशमालां आराध्य बोधिसुखं लभध्व इति समुदायार्थः । भो भव्या ! इति गम्यम् । तत्र श्रीजयसिंहसूरिनामधेया आचार्यास्तेषां विनेयः शिष्यो जयकीर्तिनामा प्रकरणकारकः जयप्रधाना कीर्त्तिर्यस्य यद्वा जगति कीर्त्तिः यस्येति स्वपरहितोपदेशकत्वेन सान्वयनाममहात्मनः तेन कृतां सिद्धान्तोक्तगाथार्थैः संग्रहेण ग्रथितां शीलोपदेशमालां शीलसारोपदेशानां मालां श्रेणि यदि वा मालामिव मालां पुष्पमयीं सर्वेषां उत्तमाङ्गकण्ठधार्यत्वेन तां आराध्य स्वय सेवित्वा श्रोतॄणां उपदिश्य वा बोधिसुखं प्राप्नुत, बोधो सम्यक्त्वे सति सुखं पारम्पर्येण मोक्षरूप यतस्तदेवानुत्तरमनन्तमव्याबाधमव्ययं समग्रमङ्गलमूलं चेति चरमगाथार्थः ।

इति समाप्तं शीलोपदेशमालाख्यं प्रकरणं तत्समाप्तौ च सम्पूर्णेयं **शीलतरङ्गिणी** नाम श्रीशीलोपदेशमालावृत्तिरिति समाप्तः ।

## 1090 कर्मविचारसारप्रकरणम्

OPENING :

अट्ठेव य कम्माइं अडवन्नसय तु होइ पयडीणं ।
आरभेण बंधइ मिच्छत्तेण इमा एणं ॥ १ ॥

CLOSING :

रईयं पगरणमेयं परमाणंदेव **साहुरंगेण** ।
**पाल्हा** सुसावयस्स य कईआ अब्भुत्थणाइ इहं ॥ **५५** ॥

ओएसवालनिम्मल-कुलसंभव परमसावएण इयं ।
पाल्हासुसावएणं पढिज्जमाणं थिरं होऊ ॥ ५६ ॥

जावइ मेरुगिरिंदो जाउ पभासइ दिणयरालोयं ।
जाव ससि झरइ सुहं ताव इमं पगरणं जयऊ ॥ ५७ ॥

जं किंवि मंदमयणा भणियं अन्नाणसुयविरुद्धं ।
तं सव्वं खमियव्वं सोहियव्वं च विबुहेहिं ॥ ५८ ॥

COLOPHON : इति **कर्मविचारसारप्रकरणं** समाप्तम् । ग्रन्थगाथा १७२ मान । श्लोक संख्या—२१५ ज्ञेया । कृतं वा. **साधुरङ्गेभ्यः** ।

Post-Colophonic : सं० १६२५ वर्षे आसाढसुदि ११ सोमे श्रीडेहिमध्ये लिखितं हीरकलस हेमराजसहितेन ।

## 1092. क्षेत्रसमासप्रकरणम्

OPENING :

नमिऊण सजलजलहर निभसरणं वद्धमाणजिणवसहं ।
समयक्खित्तसमासं वोच्छामि गुरुवएसेणं ।। १ ।।

CLOSING :

सयंभु परिमंताउ अवरतो जाव रज्जुमाणं च ।
एएण रज्जुमाणेण लोगो चऊदसरज्जुउ होई ।। ६३ ।।
पनरसतीसछप्पन्ना दुन्नि समुद्दाय लक्खपणयाला ।
ए यं खित्तसमासं भाएय सम्मदिट्ठीए ।। ६४ ।

COLOPHON :

इति श्रीप्रवचन-ऊधार खेत्र-समास सम्मत्तं ।

Post-Colophonic :

संवत् १६२२ वर्षे मार्गशिरमासे शुक्लपक्षे प्रतिपद्दिने आगरानगरमध्ये पातसाह अकब्बरजलालदी राज्ये । लिखितं मुणिमणोहरेण । आतमपठनार्थम् ।

## 1170. नलदमयन्ती-कथा

OPENING :

अर्हम् ।

कुसुमक्खयधूवेहिं दीवयवासेहिं सुंदरफलेहिं ।
पूआधयसलिलेहिं अट्ठविहा तस्स कायव्वा ।। १ ।।

नलदमयन्तीभ्यामिव ।

इहैव भरते भूमि-भामिनीभालसन्निभे ।
देशः कोशलनामास्ति दधानस्तिलकश्रियम् ।। २ ।।
नगरी कोशला तत्र यत्प्रान्तोर्व्यपि नाकवत् ।
अप्सरोभिः कृतानन्दा सुमनोभिर्मनोरमा ।। ३ ।।

CLOSING :

प्राग्जन्मनिर्मितजिनेश्वरदिव्यपूजैः सम्प्राप्तमुत्तममिदं भव...र्द्धराज्यम् ।
राज्ञा नलेन सह भीमनरेन्द्रपुत्र्या जन्मान्तरे पुनरनन्तसुखश्च मोक्षः ।। ६४ ।।
ततो भवन्तोऽपि भवन्तु सज्जा(:)सदैव तीर्थेश्वरपूजनेषु ।
यन्मुष्टिमध्ये भवतामपीह स्यादैहिकामुष्मिकसौख्ययोगः ।। ६६५ ।।

COLOPHON :

प्राग्जन्मकृतदेवपूजाफलोपरि श्रीनलदमयन्तीकथा ।

## 1192. विक्रमादि (लघु)-प्रबन्धसंग्रहः

OPENING :

अथान्यस्मिन्नवसरे श्रीविक्रमो राजवाटिकायां व्रजन् । तन्नगरनिवासिना श्रीसंघेनानुगम्यमानं बन्दिवृन्दैः श्रीसर्वज्ञपुत्र इति स्तूयमानं श्रीसिद्धसेनाचार्यं आगच्छन्तं आलोक्य सर्वज्ञपुत्र इति वचसा कुपितस्तत्सर्वज्ञतापरीक्षार्थं तस्मै मानसं नमस्कारमकरोत् ।

Closing lines of the Prabandhas

१. इति विक्रमार्कस्य अनृणपृथ्वीकरणसम्बन्धः । २. इति शीले भूयडनृपप्रबन्धः । ३. इति बीजपुरप्रबन्धः । ४. (इति वस्तुचतुष्टयप्रबन्धः । ५. इति सा. जगसिंहप्रबन्धः ।

६. (इति सा० जगडूप्रबन्धः) ७. इति श्रीसंघभक्तिविषये श्रीरत्नश्रेष्ठिकथा ८. (इति पार्वतीयराजाप्रबन्धः ।) ९. (इति देशलहर सालिगप्रबन्धः) १०. (इति पादलिप्त-नागार्जुनप्रबन्धः) ।

## 1198. श्रीपाल-कथा

OPENING : ॐ नमो वीतरागाय ।

अरिहाइ नवपयाइं भाइत्ता हिययकमलमज्झंमि ।
सिरिसिद्धचक्कमाहप्पमुत्तमं किंपि जंपेमि ॥ १ ॥

CLOSING : एसा नवपदमाहप्प-सोहिया **सिरिपालनरवरिंदकहा** ।
निसुणंत कहंताणं भवियाणं कुणउ कल्लाणं ॥ ३८ ॥

सिरि**वज्जसेण**गणहरपट्टे **पहुहेमतिलयसूरीण** ।
सीसेहिं **रयणसेहरसूरीहि** इमाउ संकलिया ॥ ३९ ॥

तस्सीस**हेमचंदेण** साहुणा विक्कमस्स वरिसम्मि ।
चउदसअठ्टावीसे लिहिया गुरुभत्तिकलिएण ॥ ४० ॥

सायरमेरु जा महि-यलम्मि जा नहयलम्मि ससिसूरा ।
वट्टंति ताव नंदउ वाइज्जंता कहा एसा ॥ ४१ ॥

COLOPHON : इति नवपदफलविषये श्रीपालचरित्रम् ।

## 1200. श्रीपाल-चरित्रम्

OPENING : श्रीगुरुभ्यो नमः ।

प्रणम्य परमात्मानं जगदानन्ददायकम् ।
**सिद्धचक्रकथां** वक्ष्ये भव्यानां शुभहेतवे ॥ १ ॥

CLOSING : श्री**पद्मनन्दी**मुनिराजपट्टे शुभोपदेशी **शुभचन्द्रदेवः** ।
श्रीसिद्धचक्रस्य कथावतारं चकार भव्याम्बुजभानुमाली ॥ १ ॥

सम्यग्दृष्टिर्विशुद्धात्मा जिनधर्मे च वत्सलः ।
**जालाक**(:)कारयामास **कथां** कल्याणकारिणी[म] ॥ २ ॥

COLOPHON : इति श्रीनन्दीश्वर-अष्टाह्निका कथा समाप्ता ।

## 1205. सिंहसेन-कथा

CPENING : युगादीशजिः[नः] पायात् प्राणिनो दानलीलया ।
यतिभ्यः प्राग्भवे येन प्राज्यमाज्यमदीयत ॥ १ ॥

CLOSING : **सिंहसेनकथां** श्रुत्वा विवेकेन मनीषिणा ।
वस्त्रदानं विधातव्यं साधुभ्यः सर्वदा मुदा ॥ ७८ ॥

**माणिक्यसुंदरः** सूरिर्वस्त्रदानकथामिमाम् ।
अकार्षीत् सुधियः सर्वे गृह्णन्तु गुणशालिनीम् ॥ ७९ ॥

COLOPHON : वस्त्रदाने सिंहसेनकथा श्रीमाणिक्यसुन्दरसूरिकृता: सम्पूर्णाः ।

Post-Colophonic : संवत् १५०२ वर्षे आषाढसुदि ५ सोमे । श्रीअञ्चलगच्छे । श्रीश्रीगुणसमुद्रसूरि-तत्पट्टालङ्कार-श्रीमाणिक्यकुञ्जरसूरीणां तस्य शिष्य पं० गुणराजगणेः ।

## 1206. सुलसाचरित्रम् सस्तबकम्

OPENING :

ॐ

अर्हं नमस्यामि सुमन्नसारं समस्तदेवैर्विहितावतारम् ।
विघ्नाभिघाताय धृताधिकारं ध्यातृप्रदत्तोत्तमशर्मभारम् ।। १ ।।

विज्ञानदानाध्ययनाधिपत्य-विवाहदीक्षागमदेशनानाम् ।
ॐ कार आदौ विदधे भयेन स: श्रीयुगादिप्रभु[र]स्तु भूत्यै ।। २ ।।

न वादबुध्या न विनोदबुद्धया न वित्तहेतोर्न च कीर्तिहेतोः ।
संसारनिस्तारपरोपकारकृते करोम्येष(व) कवित्वमेतत् ।। १५ ।।

Ct.-OPENING :

ॐ कारांकितश्रीपार्श्वं नत्वा शंखेश्वरस्थितम् ।
**सम्यक्त्वसम्भवे** काव्ये **टबार्थो** लिख्यते मया ।

विघ्ननो घात करवाने अर्थे धरचो ग्रन्थादौ इष्टदेवनें नमस्कार करवा **पुर्वक** ग्रन्थकार मंगल करै छे ।

W.-CLOSING :

इत्थं मया विरचितं **सुलसाचरित्रं सम्यक्त्वसम्भव** इतीह चिराय जीयात् ।
संशोधितं **जयसमुद्रकवीन्द्र**मुख्यै[:] पूर्वप्रतो(तौ) विलिखितं गणिनाऽमरेण ।। ४२ ।।

सम्यक्त्वसम्भवेऽत्रास्ति श्लोकानां शतसप्तकम् ।
चत्वारिंशत् तथा सर्वं संख्ययाक्षरविंशतिः ।। ४३ ।।

COLOPHON : इत्यागमिक-श्री**जयतिलकसूरि**विरचिते **सम्यक्त्वसम्भव**नाम्निमहाकाव्ये **सुलसा-चरित्रे** सुलसास्वर्गगमनो नाम अष्टमः सर्गः समाप्तम् ।

Post-Colophonic : संवत् १६११ वर्षे आसाढमासे कृष्णपक्षे तृतीयातिथौ जीववासरे × × × श्री मुंद्राबिदरमध्ये × × × × × सकलपण्डितोत्तमप्रवरपण्डित श्री ५ श्रीकीर्त्तिसारजी गणिनां तत्शिष्य पं. ।प्र। श्री ५ श्रीराज्ञानन्दजीगणिनां तत्शिष्य पं० ।प्र। श्रीज्ञानो-दयजीगणिनां तत्शिष्य सदा आज्ञाकारी मु। कस्तुरचन्द्रेण लिपीकृतं आत्मार्थे पठनार्थम् ।

## 1211. हरिबलकथा

OPENING :

.........रदयाइ धीवर निअचित्तं चेव ठावेसु ।। १६ ।।
तं वयणं सोऊणं पडिबुद्धो धीवरो इमं भणइ ।
जो वुत्तो दयधम्मो तुम एसो अवितहो चेवं ।। १७ ।।

CLOSING : इअ सोऊणं जिणवर-मुहाउ आणंदगिहवईहिट्ठो ।
सावयभगेण तओ, पढमाणुवयं पवज्जेई ।। ६८ ।।

COLOPHON : इति श्रीहरिबलराजर्षिः(र्षेः) कथानकं समाप्तम् ।

## 1211. आरामशोभा-कथा

OPENING : भाविज्ज मूलभूअं दुवाऽरभूअं पइट्ठनिहिभूअं ।
आहारभायणमिमं सम्मत्तं चरणधम्मस्स ।। १ ।।

× × × ×

इय सम्मं सम्मत्तं जो समणो वासगो धरइ ।
हिअए अपुव्वं सो इढ्ढि लहेइ आरामसोहुव्व ।। ४ ।।

CLOSING : **आरामसोहिआ** विव इअ सम्मद्दंसणंमि भो भव्वा ।
कुणह पयत्तं तुब्भे अइरा लहइ सिवसुक्खं ।। १६ ।।

COLOPHON : इति श्रीसम्यक्त्वविषये श्रीआरामशोभाकथानकं समाप्तमिति भद्रम् ।

Post-Colophonic : संवत् १६६५ वर्षे द्वितीयभाद्रवावदिएकादसी तिथौ ग० रत्नसागरलिखितं सांगानेरे । श्रीवर्द्धमानदेशनासत्कसम्बन्ध ।

## 1218. भक्तिहंसः सटीकः

OPENING : श्रीगोपीजनवल्लभाय नमः ।

जयन्ति पितृपादाब्ज-रेणवो यत्प्रसादतः ।
भक्तिप्राप्ततदन्याध्व-मोहाभावश्च पण्डितैः ।। १ ।।

मन्त्रोपासनवैदिक-तांत्रिकदीक्षार्चनादिविधिभिर्यः ।
अस्पृष्टो रमते निज-भक्तेषु स मेस्तु सर्वस्वम् ।। २ ।।

CLOSING : उपास्ति मन्यन्ते मधुमथनभक्ति निजकृता-
र्थतां तत्रोपास्यं परमपुरुषं चापि सुविदः ।
द्वयोः सारूप्यात्तद्भ्रमहतिकृते मानसगतं
मुदा भक्तेर्हंसं प्रकटमकरोद् विट्ठलकृती ।।

व्रजामि चरणं मुदा शरणमैहिकामुष्मिके ,
निरस्तनिजसंशयो य इह भाग्यवद्भिः स्मृतः ।
व्रजेशसुतपादपङ्कजपरागरागाञ्चितं ,
करोतु सततं हि मां निजतनुजवत्सलम् ।।

COLOPHON : इति श्रीगोपीजनवल्लभचरणैकतान-श्रीविट्ठलविरचितो भक्तिहंसः समाप्तः ।

Ct.-OPENING : श्रीवल्लभाचार्यवर्यचरणारविंदमकरन्दास्वादनतत्परेभ्यः ।

यदङ्घ्रिसङ्गिसङ्गेन निःसङ्गाः सङ्गिभोगिनः ।
भवन्ति भागिनो भक्तिस्तमीशं विठ्ठलं नुमः ।। १ ।।

भक्ति-भागीरथी-तीरे हंसाः कंसारिसारिणः ।
रुवन्ति रुचिरारावा यदुक्तं तदुदीर्यते ॥

अथ कर्मज्ञानोपासनामात्रपाराणां तत्तन्मतानुसारिभक्तिपदार्थवादिनां याथार्थ्यमविदुषां मतं निरासिषवो भक्तिमतसिद्धं तत्पदार्थं निरूपयन्तः प्रजोजनभेदेन मङ्गलद्वयमाचरन्ति ।

Ct.-CLOSING :

यद्रसास्वादरसिका[:] स्मरणीकृतग्रहाश्रमाः ।
इति संसृतिहंसाः सेयं भक्तितरङ्गणी ॥

COLOPHON : इति श्रीमद्वल्लभनन्दनचरणैकशरणश्रीरघुनाथकृतौ भक्तिहंसविवृतिः समाप्ता भक्तितरङ्गिणी ।

## 1219: विष्णुभक्ति-कल्पलता-प्रबन्धः

OPENING :

श्रीगणेशाय नमः ।

अतिसुदृढमगातां हर्षमङ्कैकभावा-
दधिकतममुमेशौ यं तथात्मैकयोगात् ।
तदधिकमिव यत्तौ यं सुतं वीक्षमाणौ
सफलयतु स देवो वः ऋतुं वक्रतुण्डः ॥ १ ॥

स्फटिकमणिमयाक्षस्रक्सुधापूर्णचञ्चत्-
कनककलशवीणापुस्तकान्यादधाना ।
सकलविबुधवंद्या वाङ्मयब्रह्ममूर्ति-
र्मम कमलदलाक्षी देवता सन्निधत्ताम् ॥ २ ॥

CLOSING : & COLOPHON :

आयाते हृदयं हरौ विगलितं विघ्नैर्गतं पातकैः,
कोपेनोपरतं शुचाऽगु-चकितं वीतं विरोधादिभिः ।
वित्रस्तं विषयैर्विभाय(व्य) बहुधा भेदोऽपि वेदोदितो-
दीर्णं दुःखहृदानुदारचरितो मोहः समाप्तिं गतः ॥ ३९ ॥

मच्चेतोवृत्तिलक्ष्मीरहसि विहसिते हृत्सरोजे सुजाग्रद्,
विष्वक्सेनप्रसङ्गोत्सवमवगणितोपायसर्वान्तरायम् ।
सम्प्राप्य प्रेमपाथोनिधिलहरिपरिव्याकुलश्लिष्यगाढं,
स्वामिव्यामिश्रभावं समलभत सुखे यत्र वाचां विरामः ॥४०॥

इति श्रीविष्णुभक्तिकल्पलताख्ये प्रबन्धे कविश्रीपुरुषोत्तमकृतौ चित्तप्रबोधो नामाष्टमः स्तबकः ।

माता मानी पिता विष्णुर्यस्याख्या पुरुषोत्तमः ।
इमां कल्पलतां चक्रे सतां चक्रे कृताञ्जलिः ॥ १ ॥

Post-Colophonic : संवत् १७९९ वर्षे शाके १६६४ प्रवर्त्तमाने दक्षिणायने गते श्रीसूर्ये हेमंतऋतौ माहामांगल्यफलप्रदमासोत्तम मार्गशिर्षमासे कृष्णपक्षे ११ एकादशी श्रीशनीवासरे

अद्येह श्रीनुतनपुरे लिखितमिदं पुस्तकं शुभम् । पठनार्थं ओझा श्रीरघुरामसुत चीरंजीवी ओझा श्रीदेवराम । वा परोपकाराय । लिखितं प्रभुजी कुअरजी ।

## 1220. सिद्धान्तमुक्तावली

OPENING : नत्वा हरिं प्रवक्ष्यामि स्वसिद्धान्तविनिश्चयम् ।
कृष्णसेवा सदा कार्या मानसी सा परा मता ॥ १ ॥

CLOSING : एवं स्वशास्त्रसर्वस्वं मया गुप्तं निरूपितम् ।
एतद् बुद्ध्वा विमुच्येत पुरुषः सर्वसंशयात् ॥ २१ ॥

COLOPHON : इति श्रीसिद्धान्तमुक्तावली सम्पूर्णम् ।

## 1247. नारायणकवचम् सार्थम्

OPENING : श्रीहरीकृष्णाय नमः ।

अथ नारायणकवच सटीक लिख्यते—

राजोवाच–श्लोकः—

यया गुप्तसहस्राक्षः सवाहान् रिपुसैनिकान् ।
क्रीडन्निव विनिर्जित्य त्रैलोक्या बुभुजे श्रियम् ॥ १ ॥

अर्थ– राजा परीक्षित जे ते शुकजी प्रत्ये पूछे छे हे शुकजी जे वैष्णवी विद्याये करीने विश्वरूप तेणे रक्षाने कर्यो एवो जे इन्द्र ते जे ते वाहने सहीत एवा जे पोताना शत्रुं जे दैत्य तेमने क्रीडा करतो होय ने शु एम सेहेजे जीती ने अने त्रिलोकी ना राज्य सम्बन्धी जे लक्ष्मी तेने भोगवतो हवों ।

CLOSING : & COLOPHON : श्रीशुक उवाच–

एतां विद्यामधिगतो विश्वरूपाच्छतक्रतुः ।
त्रैलोक्यलक्ष्मीं बुभुजे विनिर्जित्य मृधेऽसुरान् ॥ ४१ ॥

इति श्रीमद्भागवते महापुराणे षष्ठमस्कन्धे श्रीनारायणकवचं सम्पूर्णं समाप्ता ।
ए रित्ये श्रीमद्भागवत नामे जे मोटुं पुराण ने परमहंस नि संहितारूप तेने विषे जे षष्ठम स्कन्ध तेमां जें शुकजीनो ने परीक्षीत राजानो संवाद तेने विषे श्री नारायणकवच नु निरूपण करयुं । ए नांमे पांचमुं रत्न जे ते संपूर्ण थयुं ॥ ५ ॥

इति श्रीनीलकण्ठस्वामी-शिष्य-नित्यान्दमुनिविरचित नारायणकवचं सम्पूर्णम् समाप्ताः ।

## 1271. वेणी-स्तोत्रम्

OPENING : श्रीगणेशाय नमः ।

शेषोवाच—

पुरा कल्पापाये भगवति शयाने वटपुटे ,
तदा सर्वान् लोकान् जठरपिठरे संहृतवती ।

तदा क्षेत्रं वेणी जयति जगदीशस्य वसतिः,
प्रयागे ब्रह्माण्डे नहि समगुणाऽन्या विजयते ।। १ ।।

CLOSING : इति शेषेण पाताले सनकादिभ्य ईरितम् ।
स्तोत्रं दिवाऽथवा नक्तं श्रवणात् सर्वकामदम् ।। १० ।।
पठितव्यं पठितव्यं पठितव्यं पुनः पुनः ।
सर्वसिद्धिप्रदं स्तोत्रं न देयं यस्य कस्यचित् ।। ११ ।।

COLOPHON : इति पाताले शेषकृतं वेणीस्तोत्रम् ।

## 1303. सिद्धलक्ष्मी-स्तोत्रम्

OPENING : श्रीशं वन्दे ।

वन्दे गुरुपदद्वन्द्वं वाङ्मनसगोचरम् ।
रक्तं शुक्लप्रभामिश्रमतर्क्यां त्रैपुरं महत् ।।
गुरुमूर्ति स्मरेन्नित्यं गुरुमूर्त्ति सदा जपेत् ।।
गुरुराज्यं प्रकुर्वीत गुरुरण्यो(गुरोरन्यं) न भावयेत् ।। १ ।।

CLOSING : राजद्वारे सभास्थाने काराग्रहनिबन्धने ।
ईश्वरेण कृतं स्तोत्रं प्राणिनां हितकारिणाम् (रणम्) ।। १५ ।।
स्तुवन्तो ब्रह्मणो नित्यं दारिद्रान्न च बाध्यते ।
सर्वपापहरा लक्ष्मी [ : ] सर्वसिद्धिप्रदायिनी ।। १६ ।।

COLOPHON : इति श्रीब्रह्माण्डपुराणे सिन्धुमथने ईश्वर-विष्णुसंवादे सिद्धिलक्ष्मीस्तोत्र सम्पूर्णम् ।

## 1309. हनुमद्दुर्गम्

OPENING : श्रीगणेशाय नमः ।

अथ हनुमंतदुर्ग लिख्यते—

ॐ अस्य श्री अनन्तघोरप्रलयज्वालारौद्रस्य हनुमान् असाध्यसाधन अघोरास्त्रयोः मूलमन्त्रस्य ईश्वर ऋषिः । अनुष्टुप् छन्दः । श्रीरामलक्ष्मणो देवता । नानाछन्दांसि बीजं । अञ्जनीसूनुरिति शक्तिः । वायुपुत्र इति कीलकं । श्रीहनुमत्प्रसादसिद्धयर्थे स्वर्गलोक-मृत्युलोक-पाताललोकवश्यार्थे नवखण्डपृथ्विवश्यार्थे मम रिद्धि-सिद्धितत्व-पदसिद्धयर्थे जपे विनियोगः ।

CLOSING : ॐ हां हीं हुं आसयं ह्रीं ह्रां छ्रि कीं यां भ्रें श्रैं भ्रं भ्रां हट २ सर्व खट विश्व-खट शत्रुखट वश्यखट सर्वजनासि दृश्यखट ललां श्रीं ल्हां ल्हि मन स्तंभय २ भंजय भंजय अद्रि २ हिं व हि हिं मे सर्व हिं हिं सागर हिं हिं सर्वविष सर्वमन्त्रार्थे अथर्वण वेदसिद्धि कुरु कुरु स्वाहा ।

COLOPHON : इति श्रीअथर्वणवेद हनुमंतदुर्गं सम्पूर्णम् ।

## 1315 अष्टाविंशतिनाम-स्तोत्रम्

OPENING: अर्जुन उवाच—

किन्तु नामसहस्राणि जपन्ते च पुनः पुनः ।
यानि नामानि दिव्यानि तानि वक्ष्यामि केशव! ॥ १ ॥

CLOSING: सन्ध्याकाले स्मरेन्नित्यं प्रातःकाले तथैव च ।
मध्याह्ने जपते नित्यं सर्वपापैः प्रमुच्यते ॥ ७ ॥

COLOPHON: इति श्रीअठाईसनामस्तोत्रं सम्पूर्णम् ।

## 1317. कालिकाष्टकम्

OPENING: श्रीकालिकायै नमः ।

विशुद्धरत्नसंस्फुरत्प्रभाप्रकाशितां वरां,
प्रकृष्टमण्डपोदरस्थपद्मकोर्णको(णक) स्थिताम् ।
विभूषणैरलङ्कृतां सुरासुरारिसत्कृतां,
लसन्नृमुण्डमालिकां मुहुर्नमामि कालिकाम् ॥१॥

CLOSING: **श्रीकृष्ण**भट्टतनुसम्भव**रामचन्द्र**—
प्राप्तप्रकृष्टजननः खलु **रामकृष्णः** ।
पद्माष्टकात्मकमिमं कुसुमाञ्जलिं हि,
श्रीकालिकाचरणपङ्कजयोर्निधत्तः (त्तो) ॥ ८ ॥

COLOPHON: इति श्रीकालिकाष्टकं सम्पूर्णम् ।

Post-Colophonic: **सं० १८८६ वै० शु० १४ र० मग० ले० कृ० ।**

## 1331. गोकुलेशाष्टकम्

OPENING: अथ श्रीगोकुलेशाष्टकम्—

नन्दगोपभूपवंशभूषणं विदूषणं,
भूमि-भूति-भूरिभाग्य-भाजनं भयापहम् ।
धेनुधर्मरक्षणावतीर्णपूर्णविग्रहं,
नीलवारिवाहकान्तिगोकुलेशमाश्रये ॥ १ ॥

CLOSING: वासरावसानगोष्ठगामिगोगणानुगं,
धेनु-दोह-देह-गेह-मोहविस्मयक्रियम् ।
स्वीयगोकुलेशदानदत्तभक्तरक्षणं,
नीलवारिवाहकान्तिगोकुलेशमाश्रये ॥ ८ ॥

COLOPHON: इति श्री**रघुनाथजी**कृतं श्रीगोकुलेशाष्टकं सम्पूर्णम् ।

Post-Colophonic: हस्ताक्षर कवि **विजयदयाल** सं० १९७७ फागुन शुक्ला १० ।

## 1347. नामरत्न-स्तोत्रम्

OPENING: यन्नामार्कोदयात् पाप-ध्वान्तराशिः प्रशाम्यति ।
विकसितहृदयाब्जानि तन्नामानि सदाश्रये ॥ १ ॥

अनुष्टुभमिहच्छन्दः ऋषिरग्निकुमारजः ।
सर्वशक्तिसमायुक्तो देवः श्रीवल्लभात्मजः ॥ २ ॥
विनियोगः समस्तेष्ट-सिद्धयर्थे विनिरूपितः ।
श्रीविट्ठलः कृपासिन्धुः भक्तवश्योऽतिसुन्दरः ॥ ३ ॥

CLOSING :

नामरत्नाभिधमिदं स्तोत्रं यः प्रपठेत् सुधीः ।
त्वदीयं त्वं गृहाणाशु प्रार्थ्यमेतन्मम प्रभो ॥ ३० ॥
श्रीविट्ठलपदाम्भोजे यावद् राजति मे मनः ।
न कुतोऽपि भयं तावद् भक्तानामभयङ्करे ॥ ३१ ॥
श्रीविट्ठलपदाम्भोज-मकरन्दजुषोऽनिशम् ।
इयं **श्रीरघुनाथस्य** कृतिर्विजयतेतमाम् ॥ ३२ ॥

COLOPHON : इति श्रीनामरत्नं सम्पूर्णम् ।

## 1348. पञ्चविंशतिनाम-स्तोत्रम्

OPENING :

कृते नामसहस्रेण ज[प]न्मां पृच्छसि पाण्डव ।
यानि दिव्यानि नामानि तानि वक्ष्यामि अर्जुन ! ॥ १ ॥

CLOSING :

गवां कोटिप्रदानेन हेमभारशतेन च ।
सः पुण्यं लभते नित्यं गङ्गास्नानफलं लभेत् ॥ ६ ॥

COLOPHON: इति पचीसनाम संपूर्णम् ।

Post-Colophonic : सं० १८२५ वर्षे माघवदि १० दिने बुधवारे पुनरासरमध्ये उ । **श्रीरूपवल्लभजी** गणिः शिष्य पं० माणिकचंदजीभ्रातृ पण्डित लब्धिकमलमुनिना लिलेखि स्वहेतवे ।

## 1370. यमुनाष्टकम्

OPENING :

श्रीगणेशाय नमः ।

नमामि यमुनामहं सकलसिद्धिहेतुं मुदा
मुरारिपदपङ्कजस्फुरदमन्दरेणूत्कटाम् ।
तटस्थनवकानन-प्रकटमोदपुष्पाम्बुना ,
सुरासुरसुपूजित-स्मरपितुः श्रियं बिभ्रतीम् ॥ १ ॥

CLOSING :

तवाष्टकमिदं मुदा पठति सूरसूते सदा ,
समस्तदुरितक्षयो भवति वै मुकुन्दे रतिः ।
तया सकलसिद्धयो मुररिपुश्च संतुष्यति ,
स्वभावविजयो भवेद् वदति **वल्लभ**श्रीहरिः ॥ ९ ॥

COLOPHON : इति श्री**वल्लभदीक्षित**विरचितं **यमुनाष्टकं** समाप्तम् ।

## 1371. यमुनाष्टकम्

OPENING : श्रीसर्वेश्वरो जयति ।

कदाचित् ते तीरे जननि जननीवाक्यममृतं,
गृहीत्वा शुद्धं च ध्रुवपदमगान् मातृसहितः ।
महिम्नः ख्यातिं देशिकवरगुरोः प्राप्य नृपज-
स्तपस्तप्त्वा सद्यः शरणमिति प्राप्तस्तव तटः ॥ १ ॥

CLOSING : कदाचित् श्रीकृष्णे दृढतमकृते पापनिचये,
कुरु त्वं दृष्टि मा तव महिमनि त्वं भव दृढा ।
कदा आतुर्लोकं बहुतरहठो नान्यशरणः,
अयं मे मा यातु इति ह जननि प्रार्थनमिदम् ॥ ८ ॥

COLOPHON : इति **श्रीमन्निम्बार्कपट्टाधिरूढश्रीसर्वेश्वरशरणदेव**चरणाब्जमकरन्दास्वादनपर-**श्रीनिम्बार्कदेवशरण**मुखोद्गलितप्रार्थनपरशुभोदयकर**यमुनाष्टक**मिदम् ॥ ९ ॥

## 1372 यमुनाष्टकम्

OPENING : आतुरन्तकस्य यातनावियभि (विषाभि ?) हारिणी,
प्रेक्षयातिपापिनोऽपि तापसिन्धुतारिणी ।
नीरमाधुरीभिरप्यशेषचित्तबन्धिनी,
मां पुनातु सर्वदाऽरविन्दबन्धुनन्दिनी ॥ १ ॥

CLOSING : तुष्टबुद्धिरष्केन (रष्टकेन) निर्मलोर्मिचेष्टिता,
त्वामनेन भानुपुत्रि सर्वदेववेष्टिता ।
यः स्तवीति वर्धयस्व सर्वपापमोचने,
भक्तिपूरमस्य देवि ! पुण्डरीकलोचने ! ॥ ९ ॥

COLOPHON : इति **श्रीयमुनाष्टकं जीवगोस्वामी**कृतं सम्पूर्णम् ।

Post-Colophonic : संवत् १९०२ आषाढ कृष्ण १ भृगु ।

## 1373. युगलसहस्रनाम-स्तोत्रम्

OPENING : श्रीकृष्णाय नमः ।

एकदा नारदं प्राप्य ब्रह्मणः सुतमुत्तमम् ।
कृताञ्जलिपुरो भूत्वा गौतमो मुनिरब्रवीत् ॥ १ ॥
कथं गोप्यो व्रजे स्वामी (मिन्) गोविन्दविरहातुराः ।
तन्मनास्तद्गतप्राणा दधुर्देहं वदस्व मे ॥ २ ॥

× × × ×

जपेन्नामसहस्रं तु दासीगोपीभिरावृतम् ।

सूत उवाच—

देवकीनन्दनः शौरिर्वासुदेवो बलानुजः।

× × × × × × × × × × ×

CLOSING : तस्माद् वृन्दावने गोप्यो गोविन्दनिकटे स्थिता (:)।
यथापूर्वं वै कुर्वन्ति ज्ञातपूर्वं मया मुने ॥ १३६ ॥

COLOPHON : इति श्रीनारदीयपुराणे नारदेनोक्तं युगलकिशोरसहस्रनामस्तोत्रं सम्पूर्णम्।

Post-Colophonic : सं० १७८० वर्षे पौषशुदि ११ गुरुवारे।

## 1377. वल्लभाष्टकम्

OPENING : श्रीमद्वृन्दावनेन्दुप्रकटितरसिकानन्दसन्दोहरूप -
स्फूर्जद्रासादिलीलामृतजलधिभराक्रान्तसर्वोऽपि शश्वत्।
तस्यैवात्मानुभावप्रकटनहृदयस्याज्ञया प्रादुरासीद्,
भूमौ यः सन्मनुष्याकृतिरतिकरुणस्तं प्रपद्ये हुताशम् ॥ १ ॥

CLOSING : अज्ञानाद्यन्धकारप्रशमनपटुताख्यापनाय त्रिलोक्या-
मग्नित्वं वर्णितं ते कविभिरपि सदा वस्तुतः कृष्ण एव।
प्रादुर्भूतो भवानित्यनुभवनिगमाद्युक्तमानैरवेत्य,
त्वां श्रीश्रीवल्लभेमे निखिलबुधजना गोकुलेशं भजन्ते ॥ ८ ॥

COLOPHON : इति श्रीवल्लभाष्टकं सम्पूर्णम्।

Post-Colophonic : सं० १९२५ प्रवर्त्तमाने वैशाखमासे शुक्लपक्षे १४ शनौ लिपिकृतं कवीश्वर जयलालेन कृष्णगढमध्ये।

## 1390. विष्णु-दिव्यसहस्रनाम-स्तोत्रम्

OPENING : श्रीगणेशाय नमः

श्रीकृष्णायायन (?) उवाच—

पुराणपुरुषो विष्णुः पुरुषोत्तम उच्यते।
नाम्नां सहस्रं वक्ष्यामि तस्य भागवतोद्धृतम् ॥ १ ॥

अथ प्रथमस्कन्धनामानि—

CLOSING : श्रीकृष्ण कृष्णसख वृष्णवृषावनिध्रक्,
राजन्यवंशदहनानपवर्गवीर्यः।
गोविन्दगोपवनिताव्रजनृत्यगीत-
तीर्थश्रवः श्रवणमङ्गल पाहि भृत्यान् ॥ २५६ ॥

COLOPHON . इति श्रीभागवतसागरसमुच्चये श्रीवैश्वानरोक्तं विष्णुसहस्रनामस्तोत्रं सम्पूर्णम्।

## 1392. विष्णु-दिव्यसहस्त्रनाम-स्तोत्रं सार्थम्

CPENING : श्रीगुरुभ्यो नमः। ॐ नमो भगवते वासुदेवाय।

सर्वलोक कल्याण रै तांई श्रीमहादेवजी पापीया नैं पावन करण की तांई अनेक आचार मैं रहण कै तांई धरम १ अर्थ २ कांमना ३ मोक्ष ए च्यारि पदारथ पावण कै तांई श्रीविष्णुसहस्रनाम लोका मैं प्रवर्त्तायौ छै सु कहै छै–

**श्लोक–** ब्रह्मलोकादिह प्राप्तं नारदं भगवत्प्रियम्।
दृष्ट्वा नत्वा सभायां ते प्रपच्छ(च्छुः) मुनयो मुदा ॥ १ ॥

CLOSING : **सूत्रम्–** राम रामेति रामेति रमे रामे मनोरमे।
सहस्रनामसमं तुल्यं रामनाम वरानने ॥ ५५ ॥

**अर्थ–** राम नाम मैं हे रमे मे लिखमी इतरा नाम छै, ए नामसहस्र-संमानि छे। एक श्लोक पाठ कीयां सहस्रनाम रौ फल छै तू सत्य करि माने। ए पाठ श्रीमहादेवजी पारवतीजी नुं सुणायो ॥ ५ ॥

COLOPHON : इति श्रीपद्मपुराणे उत्तरखण्डे गौरीशङ्करसम्वादे श्रीमहादेवोक्तं सर्वरहस्यभूतं श्रीविष्णुसहस्रनामकं संपूर्णम्।

## 1394. विष्णुसहस्रनामार्चनम्

OPENING : श्रीगणेशाय नम :

ॐ विश्वस्मै नमः। १ ॐ विष्णवे नमः। २ ॐ वषट्काराय नमः। ३ ॐ भूतभव्यभवत्प्रभवे नमः ४। ॐ भूतकृते नमः ५, ॐ भूतभृते नमः ६।

× × × ×

CLOSING : ॐ शार्ङ्गधन्वने नमः ७, ॐ गदाधराय नमः, ॐ रथांगपाणये नमः ८, ॐ अक्षोभ्याय नमः ९, ॐ सर्वप्रहरणायुधाय नमः १०००।

COLOPHON : इति श्रीविष्णुसहस्रनामार्चनं समाप्तम्।

## 1405. शिवाष्टक-स्तोत्रम्

OPENING : ओं नमः शिवाय।

अगस्त्यमुनिरुवाच—

अद्य मे सफलं जन्म अद्य मे सफलं तपः।
अद्य मे सफलं ज्ञानं शम्भो त्वत्पाददर्शनात् ॥१॥

CLOSING : शिवाष्टकमिदं स्तोत्रं यः पठेच्छिवसन्निधौ।
शिवलोकमवाप्नोति शिवेन सह मोदते ॥ ९ ॥

COLOPHON : इति श्री अगस्त्यमुनिविरचितं शिवाष्टकं स्तोत्रं सम्पूर्णम्।

## 1407. श्रीमल्ललिताष्टकम्

OPENING : राधामुकुन्दपदसम्भवघर्मबिन्दु-
निर्मन्थनोपकरणीकृतदेहलक्षाम् ।
उत्तुङ्गसौहृदविशेषवशात् प्रगल्भां ,
देवीं गुणैः सुललितां ललितां नमामि ॥ १ ॥

CLOSING : नन्दन्नमूनि ललितागुणलालितानि ,
पद्यानि यः पठति निर्मलदृष्टिरष्टौ ।
प्रीत्या विकर्ष[ति ?]जनं निजवृन्दमध्ये ,
तं कीर्त्तिदा पतिकुलोज्वलकीर्त्तिवल्ली ॥ ६ ॥

COLOPHON : इति श्रीमद्रूपगोस्वामीविरचितं श्रीमल्ललिताष्टकं समाप्तम् ।

## 1408. सरय्वष्टकम्

OPENING : श्री गणेशाय नमः ।
जननि ! सरयुदेवि ! त्वज्जलं ब्रह्मलोकात् ,
क्षितितलमुपनीतं ब्रह्मपुत्रर्षभेण ।
विमलमतिवशिष्ठेनात्मनो योगसिद्धये ,
रघुवरकुलवृद्धयै रामगङ्गे ! प्रसीद ॥ १ ॥

CLOSING : स्तोत्रमेतद् ऋषिप्रोक्तं सरय्वष्टकमद्भुतम् ।
यः पठेत् प्रयतो नित्यं सर्वसिद्धिमवाप्नुयात् ॥ ६ ॥

COLOPHON : इति श्री अगस्तसहितायां गार्ग्योक्तं सरय्वष्टकं सम्पूर्णम् ।

## 1409. सरस्वती-षोडशनाम-स्तोत्रम्

OPENING : सरस्वती महाभागे ! वरदे कामरूपिणी ।
विश्वरूपी विशालाक्षी दे (?) विद्या परमेश्वरी ॥ १ ॥

CLOSING : या कुन्देन्दुतुषारहारधवला या श्वेतपद्मासना ,
या वीणावरदण्डमण्डितकरा या शुभ्रवस्त्रावृता ।
या ब्रह्माच्युतशङ्करप्रभृतिभिर्देवैः सदा वन्दिता ,
सा मां पातु सरस्वती भगवती निःशेषजाड्यापहा ॥ १० ॥

COLOPHON : इति श्रीसरस्वतीषोडशनामस्तोत्रम्

## 1410. सावित्र्यष्टकम्

OPENING : श्रीगणेशाय नमः
श्रीमन्मन्दसुहास्यपेशलमुखां सुस्निग्धगण्डस्थलां ,
माणिक्यैः खचितान्तरप्रविलसत्ताटङ्कयुग्मान्विताम् ।

कंजाक्षीं कमनीयवेणिनिकरां कारुण्यमूर्तिं शिवां,
सावित्रीं सचराचरस्य जननीं वन्दे जगन्मोहिनीम् ॥ १ ॥

CLOSING : **सावित्र्यष्टक**मेतदर्पितमलं तद्दिव्यपादाम्बुजे,
सावित्री**मनुराज**केन ग्रथितं **दिक्पालवर्णा**ङ्कितम् ।
श्रीमत्**कुम्भज**पादपद्मकृपया प्राप्तं वरं मुक्तिदं,
जप्त्वा कोऽपि समस्तक्लेशनिचयैर्मुक्तो भवेन्नान्यथा ॥९॥

इतीदं यतिवर्य्येण **हरिदेवेन** कीर्त्तितम्,
श्रीमत्कुम्भजपादाब्ज-कृपया क्षन्तुमर्हथ ॥ १० ॥

COLOPHON : इति श्रीपरमहंसाख्य-यति ऋषिवर्य्य-हरिदेवकृतं सावित्र्यष्टकं सम्पूर्णम् ।

Post-Colophonic : संवत् १८७६ फा० शु० ६ मं० मगनीरामेणाऽलेखि अजमेरमध्ये ।

## 1411. सूर्यशतकम् सटीकम्

OPENING : नमोऽर्हद्भ्यः ।

जम्भारातीभकुम्भोद्भवमिह दधतः सान्द्रसिन्दूररेणुं,
रक्तास्सक्तैरिवौघैरुदयगिरितटीधातुधाराद्रवस्य ।
आयान्त्या तुल्यकालं कमलवनरुचे वारुणावो विभूत्यै,
भूयासुर्भासयन्तो भुवनमभिनवा भानवो भानवीयाः ॥१ ।

भानोरिमे भानवीयाः सावित्रा भानवो रश्मयो विभूत्यै लक्ष्म्यै भूयासुः भवन्तु । वो युष्माकं । कीदृशास्ते रक्ताः आताम्राः । अत उत्प्रेक्ष्यन्ते-सान्द्रसिन्दूररेणुं दधत इव । सांद्रश्चासौ सिन्दूररेणुश्च सान्द्रो घनो बहुलः सिन्दूररेणुः सिन्दूररजस्तं दधत इव धारयन्तो यथा । इत्यादि ।

CLOSING : देवः किं बान्धवः स्यात् प्रियसुहृदथवाचार्य्य आहोस्विदार्यो,
रक्षा चक्षुर्न दीपो गुरुरुत जनको जीवितं बीजमोजः ।
एवं निर्णीयते यः क इव न जगतां सर्वथा सर्वदाऽसौ,
सर्व्वाकारोपकारी दिशतु दशशताभीशुरभ्यर्थितं वः ॥ १० ॥

असौ दशशताभीशुः सहास्रांशुः वो युष्मभ्यं अभ्यर्थितं दिशतु यच्छतु । × × × × × ततः क इति निर्णेतुमशक्य एव सर्वथा सर्वप्रकारैः सर्वदा सर्वकालमिति ॥१०० पुरषवर्णकः ।

COLOPHON : इति श्रीसूर्यशतकटीका सम्पूर्णा ।

Post-Colophonic : नेत्रश्रीपरमेष्ठिषोडशमिते वर्षे च मासः(से) शुचेः(चौ),
पक्षे शुद्धतमेसु शुद्धनवमीघस्रेऽपि वारेऽर्कजे ।
साहाय्याद् द्विजमोहणाह्व**हरिजी** नाम्नोः प्रति लेखया-
ञ्चक्रे पण्डित**पद्ममन्दिरगणि**र्विद्वन्मनोह्लादिनीम् ॥ १ ॥

## 1437. ईश्वरी-छन्दः

OPENING: श्रीआसापूराजी सत्य छे।

अथ ईश्वरी नो छंद लिख्यो—

भगवती भगवत्पदपङ्कजंभ्रमरभूतसुरासुरसेवितम् ।
सुजनमानसहंसपरिस्तुतंकमलयामलया निभृतं भजे ॥ १ ॥

CLOSING: रमयति किल कर्षं तेषु चित्तं नराणा-
मवरजवरय(म ?)स्माद् **रामकृष्णेन** कविना ।
अकृत सुकृतगम्यं रम्यपद्यैकहर्म्यं ,
स्तवनमवनहेतुप्रीतये विश्वमातुः ॥ २८ ॥

COLOPHON: इति श्रीइश्वरीछन्दः सं० महिषासुरमर्दिनीप्रभृतीसम्बोधन पदानि लिख्यते—

## 1442. कालिकास्तवः

OPENING: गजेन्द्रगतिगामिनीं गिरिमहेन्द्रकानन्दिनीं ,
महेशहृदि मोहिनीं शवनिवाससिद्धासनीम् ।
गुणत्रयविभाविनीं मधुमदेन सम्मोदिनीं ,
सुरेश्वरविनोदिनीं सततकालिकां भावये ॥ १ ॥

CLOSING: यमस्य प्रियवल्लभां द्विजगृहे सदा संचरीं ,
गतासुक रमेखलां कटितटे सदा शोभिनीम् ।
कबन्धहृदि मालिकां खशरसंख्यकापूरिणीं ,
गिरीश्वरविनोदिनीं सततकालिकां भावये ॥ ८ ॥

COLOPHON: इति श्रीमच्च**चन्द्रदत्तेन** कृतं **कालिकास्तवं** सम्पूर्णम् ।

Post-Colophonic: सं० १८६४ कार्तिकसुक्ल ८ अजमेर मगनीरामेण सेठजीकस्य उपवनेषु ।

## 1443. कीलक-स्तोत्रम्

OPENING: ऋषिरुवाच—

विशुद्धज्ञानदेहाय त्रिवेदीदिव्यचक्षुषे ।
श्रेयःप्राप्तिनिमित्ताय नमः सोमार्द्धधारिणे ॥ १ ॥
सर्वमेतद् विजानीयान् मन्त्राणामभिकीलकम् ।
सोऽपिक्षेमवाप्नोति सततं जाप्यतत्परः ॥ २ ॥

CLOSING: ऐश्वर्यं त्वत्प्रसादेन सौभाग्यारोग्यसम्पदः ।
शत्रुहानिः परो मोक्षः स्तूयते सा न किं जनैः ॥ १४ ॥

COLOPHON इति कीलकस्तोत्र सम्पर्णम् ।

## 1445. कृष्ण-स्तवः

OPENING : ओं नमः श्रीकृष्णाय ।

नवीननीरदश्यामं नीलेन्दीवरलोचनम् ।
वल्लवीनन्दनं वन्दे कृष्णं गोपालरूपिणम् ॥ १ ॥

CLOSING : त्रिसन्ध्यं तस्य तुष्टोऽसौ ददाति वरमीप्सितम् ।
राजवल्लभतामेति भवेत् सर्वजिनप्रियम् ॥ २ ॥
अचलां भूतिमाप्नोति स वाग्मी जायते ध्रुवम् ॥ १७ ॥

COLOPHON : इति श्रीकृष्णस्तवं समाप्तम् ।

## 1452. गङ्गास्तुतिः

OPENING : श्रीगणेशाय नमः ।

मदनमथनमारादाश्लिषं वीक्ष्य दारा-
निव हृदि कृतरोषाद् धावमाना धरित्रीम् ।
इव शिवधृततारा कान्तकान्तैक्यधारा
हरतु दुरितपारावारमारान्मदीयम् ॥ १ ॥

CLOSING : हरिहरार्चनचित्तचमत्कृतः सुकृतिकेवलराममहीसुरः ।
हरिपदासितपद्मतरंगिणीं प्रतिसमर्पितवान्नवमालिनीम् ॥ २५ ॥

COLOPHON : इति श्रीज्योतिषराय **केवलराम**विरचिता **गङ्गास्तुतिः** समाप्ता । अत्र अनुष्टुप् छंदेन श्लोकसंख्या न्यूनपञ्चाशन्मिता ।

Post-Colophonic : संवत् १८३७ ।

## 1453. गायत्र्याख्यानम्

OPENING : श्रीगणेशाय नमः ।

अथ गायत्र्याख्यानम्—

स स्वरूपं वरेणीयं प्रार्थनीयं [च] सज्जनैः ।
शुद्धानन्देशु[प्सु]भिरपि यैर्यं द्वन्द्वं हि कथ्यते ॥ १ ॥
शुद्धानन्दविरक्तेन प्रार्थितं तन्मुमुक्षुणा ।
वेदान्तशुद्धावारूढं भर्गो विद्यादिवाहकम् ॥ २ ॥
तस्मिन्नृपेतु प्रारब्धानुसारधृतिविग्रहाः ।
सच्चिदानन्ददेवस्य स्वरूपं चिन्तयेमहि ॥ ३ ॥

CLOSING : सोहमस्मीत्युपासीत विधिना येन केनचित् ।
तं विधिं सर्वदा सेवे [द्] योगी परमतत्त्ववित् ॥ १० ॥

COLOPHON : इति गायत्र्याख्यानं समाप्तम् ।

## 1457. गायत्री-व्याख्या

OPENING : श्रीगोपीजनवल्लभाय नमः ।

अथ गायत्री-व्याख्या लिख्यते—श्रीकृष्णः शरणं मम ।

श्रीकृष्णः स्वात्मनः सर्वमुत्पाद्य विविधं जगत् ।
तदासक्तांशबोधाय शब्दब्रह्माऽभवत्स्वयम् ।। १ ।।

तत्र सर्गादिभिः क्रीडन् नित्यानन्दरसात्मकः ।
निजभावप्रकाशाय गायत्रीरूप उद्बभौ ।। २ ।।

CLOSING : & COLOPHON : तस्मात् प्रणव इत्युक्तस्तस्याप्यर्थोऽयमेव हि ।। ३४ ।।

इति श्रीमद्विट्ठलदीक्षितानां हस्ताक्षरेषु लिखितानि पद्यानि ।

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ।।

इति श्रुतेः ! इत्यपि तत्रैव ।

इति श्रीमद्वल्लभाचार्यकृता **गायत्रीव्याख्या** सम्पूर्णम् ।

Post-Colophonic : सं० १९५३ आषाढशुक्ला १२ लि० कवि जय ।

## 1471. जगदम्बा-महिम्नस्तोत्रम्

OPENING : श्रीगणेशाय नमः ।

यदानन्दे लीना विधिहरिहरेन्द्रामरगणाः,
सुखाब्धौ क्रीडन्तो विदलितभयाः प्रापुरमृतम् ।
तदा किञ्चित्तत्वं मुनिमनुजसङ्घैरभिनुतं,
प्रपन्नोऽहं मातस्तव विमलतेजोभिलसितम् ।। १ ।।

CLOSING : **महिम्नाख्यं** स्तोत्रं तव मनुसुयंत्रोद्धृतियुतं,
तथा ध्यानैर्युक्तं विरचितमिदं स्वच्छमतिना ।
**धरानन्देनाथ** प्रवर**परमानन्द**गुरुतो-
विदृब्धां शुद्धान्तः **भरतनगरे** विप्रलसिते ।। २२ ।।

COLOPHON : इति धरानन्दनाथकृत-श्रीजगदम्बाया महिम्नाख्यस्तोत्रं सम्पूर्णम् ।

Post-Colophonic : संवत् १९१७ का पोसमासे शुक्लपक्षे तिथौ १ प्रतिपदायां शनिवासरे मगनीरामेणालेखि अजमेरमध्ये । ज्वालानाथस्य पुस्तकात् ।

## 1488. त्रिपुरा-स्तोत्रम् सस्तबकम्

OPENING : श्रीसर्वज्ञशक्त्यै नमः ।

ऐन्द्रस्येव शरासनस्य दधती मध्येललाटं प्रभां,
शौक्लीं कान्तिमनुष्णगोरिव शिरस्यातन्वती सर्वतः ।

एषाऽसौ त्रिपुरा हृदि द्युतिरिवोष्णांशोः सदाहस्थिता,
छिन्द्यान्नः सहसापदैस्त्रिभिरघं ज्योतिर्मयी वाङ्मयी ।। १ ।।

दूहो– जाकी सगति प्रभावतैं, भयो विश्व सुविकास ।
सोई पदारथ चित्त धरो, ध्यान लीन ह्वै तास ।। १ ।।

जो त्रिपुरा भगवती ऐन्द्रस्येव शरासनस्य कहतैं इन्द्र है स्वामि जाको ऐसो जा शरासन कहतैं धनुष इतनैं वर्षा ऋतु को धनुष ताकी जो प्रभा कहतैं ज्योति ताकौं मध्ये मध्ये ललाटं दधती क० ललाटमध्य विषै धारती है । इतनैं इन्द्र धनुष की सी पंचवर्णी ज्योत मेरे दोनौं भौंहा वीचि धार रही है । ए तात्पर्यार्थ-पद मैं ऐंकार बीज कह्यौ ।

CLOSING: & COLOPHON:

सावद्यं निरवद्यमस्तु यदि वा किं वाऽनया चिन्तया,
नूनं स्तोत्रमिदं पठिष्यति जनो यस्याऽस्ति भक्तिस्त्वयि ।
संचित्यापि लघुत्वमात्मनि दृढं संजायमानं हठात्,
त्वद्भक्त्या मुखरीकृतेन रचितं यस्मान्मयापि ध्रुवम् ।। २१ ।।

इति श्री**लघ्वाचार्य**विरचितं श्री**त्रिपुरास्तोत्रं** सम्पूर्णम् ।

अब या स्तोत्र की महिमा कहे है । कोऊ या स्तोत्र कों सावध क. सदोष कहै है, कोऊ या स्तोत्र कौं निरवद्य क. निर्दोष कहै है । × × × × × × तेरे प्रसाद के निश्चय तैं रचितं क. ए स्तोत्र रच्यो ।। २१ ।।

दूहो– सत्रहसै अठानुअै, माघ कृष्ण पख बीज ।
सोमवार ए वचनिका, पूरण लिखी सबीज ।। १ ।।
गछ खरतर कुल खेम के, दयासिंघ के सीस ।
रूपचंद कीन्हे सुगम स्तोत्र काव्य इक ईश ।। २ ।।

ग्रंथाग्रंथ ४७५. लेखकाः वदन्ति तदनुसारेण मयापि कृतं गणनम् ।

## 1489. त्रिपुरास्तोत्रम्

OPENING: & CLOSING:

श्रीत्रिपुरसौन्दर्यै नमः ।

Same as at no. 1437

COLOPHON:

इति श्रीत्रिपुराछन्दसम्पूर्णम् ।

Post-Colophonic:

लि । गुंसाई निश्चलपुरिः ।

## 1490. त्रैलोक्यमङ्गल-कवचम्

OPENING:

श्रीगणेशाय नमः । श्रीकृष्णाय नमः ।

पुलस्त्य उवाच—

भगवन् सर्वधर्मज्ञ **कवचं** यत्प्रकाशितम् ।
**त्रैलोक्यमङ्गलं** नाम कृपया कथय प्रभो ।

CLOSING :

इदं कवचमज्ञात्वा भजेद् यः पुरुषोत्तमम् ।
शतलक्षप्रजप्तोऽपि न मन्त्रः सिद्धिदायकः ।।

COLOPHON : इति **सनत्कुमारतन्त्रे** त्रैलोक्यमङ्गलं नाम कवचं समाप्तम् ।

## 1498. दत्तमहिम्नस्तोत्रम्

OPENING :

दत्तात्रेयं प्रपद्ये शरणमनुदिनं दीनबन्धुं मुकुन्दं,
निर्गुण्ये सन्निविष्टं पथि परमपदं बोधयन्तं मुनीनाम् ।
भस्माभ्यङ्गं जटाभिः सुललितमुकुटं दिक्पटं दिव्यरूपं,
सिंहाद्रौ(ड्यौ) नित्यवासप्रमुदितममलं सद्गुरुं चापि शीलम् ।।१।।

CLOSING :

योऽधीते नित्यमन्त्रे स्तनचरणयोः स्तोत्रमत्यन्तगुह्यं,
कृत्वा स्वान्तं निजान्तं विमलतरमतिः स्यान्मुनीनां वरेण्यम् ।
कामक्रोधोऽहि(धाहि)मर्दी विदितपरपदो देवदत्तप्रसादात्,
नित्यं प्रेमार्थयुक्तं(क्तः) क्षपितकलिमलः शाश्वती स्वस्तिरूपम् ।।६।।

COLOPHON : इति श्रीपरमहंसपरिव्राजकाचार्य-श्रीमत्शंकराचार्य विरचितं दत्तमहिम्न सम्पूर्णम् ।

## 1502. देवीक्षमापराध-स्तोत्रम्

OPENING :

ॐ श्रीगणेशाय नमः ।

त्वं काली त्वं च दुर्गा त्वमसि गिरिभवा सिद्धि-लक्ष्मीः शिवा त्वं,
त्वं माता कालरात्रिस्त्वखिलजनपदस्**थानमुख्यैक**हेतुः ।
त्वं छिन्ना त्वं च तारा विकटितरदना मंगला हिङ्गला त्वं,
सर्वं मामापराधं रिपुदलदलने क्षमापहे चोग्रकाली ।। १ ।।

CLOSING :

य आश्विने मासि च शुक्लपक्षे काल्योत्सवे चाष्टमी(मि)शौरिवारे ।
श्रीचन्द्रदत्तेन कृतेन पद्यैः क्षमापराधान् कुरु चोग्रकाली ।। ११ ।।

COLOPHON : इति क्षमापराधस्तोत्रं श्रीचन्द्रदत्तेन कृतम् ।

Post-Colophonic : संवत् १८९४ कार्तिकसुदि ५ मगनीरामेणालेखि अजमेरमध्ये सेठजीकस्य उपवनेषु । शुक्रवासरे ।

## 1515. पञ्चपद्यानि

OPENING :

इति श्रीकृष्णविक्षिप्तमानसा रतिवर्जिताः ।
अनिर्वृत्ता लोकवेदे मुख्यास्ते श्रवणोत्सुकाः ।। १ ।।

CLOSING :

अनन्यमनसो मर्त्या उत्तमाः श्रवणादिषु ।
स मार्गद्वितये प्रोक्तो भक्तौ ज्ञाने विशेषतः ।। ५ ।।

COLOPHON : इति पञ्चपद्यानि ।

## 1519. पुष्टिप्रवाहमर्यादा-स्तोत्रम्

OPENING :

पुष्टिप्रवाहमर्यादा विशेषेण पृथक् पृथक् ।
जीवदेहक्रियाभेदैः प्रवाहेण फलेन च ॥ १ ॥
वक्ष्यामि सर्वसन्देहा न भविष्यन्ति यच्छ्रुतेः ।
भक्तिमार्गस्य कथनात् पुष्टिरस्तीति निश्चयः ॥ २ ॥

CLOSING :

दुर्ज्ञास्ते भगवत्प्रोक्ता ह्यज्ञास्ता ननु ग्रे पुनः ।
प्रवाहेऽपि समागत्य पुष्टिर्यस्तैर्न युज्यते ॥ २५ ॥
सोऽपि तैस्तत्कुले जातः कर्मणा जायते यतः ॥ २६ ॥

COLOPHON :

इति श्रीपुष्टिप्रवाहमर्यादास्तोत्रं सम्पूर्णम् ।

## 1520. पुष्पस्तवराजः [कर्पूरस्तवराजः]

OPENING :

श्रीगणेशाय नमः ।

कर्प्पूरं मध्यमान्त्यस्वरपररहितं सेन्दुवामाक्षियुक्तं ,
बीजं ते मातरेतत् त्रिपुरहरवधु त्रिःकृतं ये जपन्ति ।
तेषां गद्यानि पद्यानि च मुखकुहरादुल्लसन्त्येव वाचः ,
स्वच्छन्दं ध्वान्तधाराधररुचिरुचिरे सर्वसिद्धिं गतानाम् ॥ १ ॥

CLOSING :

कुरङ्गाक्षीवृन्दं तमनुसरति प्रेमतरलं
वशस्तस्य क्षोणीपतिरपि कुबेरप्रतिनिधिः ।
रिपुः कारागारं कलयति च तत्केलिकलया
चिरं जीवन्मुक्तः स भवति सुभक्तः प्रतिजनु ॥ २२ ॥

COLOPHON :

इति श्रीकर्प्पूरस्तवराजः समाप्तः ।

Post.-Colophonic : १८५४ शुभम् ।

## 1521. पुष्पाञ्जलि-स्तोत्रम्

OPENING : & CLOSING :

श्रीगणेशाय नमः ।

अथ पुष्पाञ्जलीस्तोत्र —

Same as at no. 1437 and 1489

COLOPHON : इति श्रीरामकृष्णभट्टविरचितं सत(प्त)विंशतिपद्यपुष्पांजलिस्तोत्रं समाप्तम् ।

Post.-Colophonic : लिखितं मुनिगुणचन्द्रेण श्रीमेदनीपुरमध्ये । (सं० १७८४ वर्षे)

## 1528. बलिभद्र-कवचम्

OPENING :

श्रीगणेशाय नमः ।

ॐ अस्य श्रीबलिभद्रकवचस्य ब्रह्मविष्णुमहेश्वरो(रा)देवता गायत्रीछन्दः आदित्य

सहिताय महाबलीप्रचण्डाय कौरववारणाय हलमुसलायुधाय नद्यंतिजुरबन्धनाय कुरु-कुरु स्वाहा XXXXX

अथातः संप्रवक्ष्यामि बलभद्र नमोऽस्तु ते ।
महावीरस्य वीरोधं हलं च मुसलं (ला) युधम् ॥ १ ॥

CLOSING : कवचमिमं मूलं लक्षमात्रं प्रमाणकं प्रयोग(गो)भवेत् सिधिमन्य[सिद्धि मनो] वांछितां प्रार्थयेत् । मलयागिरंचंदन मेलि काकूवू धूप जनार्दन दीप घृत को कीजे । नैवेद्यमनन्यधी. लक्षः सम्पूर्णम् ।

## 1533, बृहस्पति-स्तोत्रम्

OPENING : बृहस्पतिः सुराचार्यो दयावान् शुभलक्षणः ।
लोकत्रय······श्रीमान् सर्वज्ञः सर्वतोमुखः ॥ १ ॥

CLOSING : यः पठेत् प्रातरुत्थाय शुचिर्भूत्वा समाहितः ।
अप्रीतोऽपि भगवान् शुभप्रीतिः तस्य जायते ॥ ५ ॥

COLOPHON: इति बृहस्पतिस्तोत्रम् ।

## 1534. भक्तिवर्द्धिनी-स्तोत्रम्

OPENING : यथा भक्तिः प्रवृद्धा स्यात् तथोपायो निरूप्यते ।
बीजभावे दृढे तु स्यात् त्यागाच्छ्रवणकीर्त्तनात् ॥ १ ॥

CLOSING : इत्येवं भगवच्छास्त्रं गूढतत्त्वं निरूपितम् ।
य एतत् समधीयीत तस्यापि स्याद् दृढा रतिः ॥ ११ ॥

COLOPHON: इति भक्तिवर्द्धिनीस्तोत्रम् ।

## 1537. भगवती-पुष्पाञ्जलि-स्तोत्रम्

OPENING : & CLOSING : श्रीगणेशाय नमः ।
अथ पुष्पाञ्जलि लिख्यते—

Same as at no. 1437, 1489 and 1521

इति श्रीपुष्पाञ्जली संपूर्णम् ।

## 1545. भारती-स्तोत्रम्

OPENING : अथ भारती नो स्तोत्र लिख्यते—

विपुलसौख्यमनन्तधनागमं रिपुकुलक्षयमित्रसमागमम् ।
निगमशास्त्रविवेकमहोदयं भवति पञ्चविनायकदर्शनम् ॥ १ ॥

छन्दयमकबन्धः—

विशदशारदचन्द्रनिभानना मृगमयो भवि खञ्जनलोचना ।
तरुणभूरुहपल्लवतां धरा हरतु नो दुरितं भुवि भारती ॥ २ ॥

मुनिविलोचनमानमहीसमे नभसि मासि तिथौ प्रतिपद्रवौ ।
धिजवरा न चर स्तवनं गिरि स्तुतिमनोद्वि(ब्धि)जलं तु बतो हरिः ॥२३॥

CLOSING :

भगवति स्तवनं प्रसकोमलं भय(ज) नदोषदरिद्रविनाशनम् ।
मम कृपा क्रियते च विद्याधरं प्रतिदिनं हृदमे(ये) कमलापति(तौ) ॥१४॥

कमलभूतनयामुखपङ्कजे विसुनुते कमलाकरपल्लवे ।
विपुक्ष(वपुषि ?)ते रमते कमलाङ्कजे प्रतिदिनं हृदये कमलापति(:) ॥१५॥

COLOPHON : इति श्रीकालिकस्य कृत भारतीस्तोत्रं सम्पूर्णम् ।

## 1551. मणकर्णिका-स्तोत्रम्

OPENING : श्रीगणेशाय नमः ।

त्वत्तीरे मणिकर्णिके हरिहरौ सायुज्यमुक्तिप्रदौ ,
वादं तौ कुरुतः परस्परमुभौ जन्तोः प्रयाणोत्सवे ।
मद्रूपो मनुजो यमस्तु हरिणा प्रोक्तः शिवस्तत्क्षणे,
तन्मध्याद् भृगुलाञ्छनो गरुडगः पीताम्बरो निर्गतः ॥ १ ॥

CLOSING :

कृच्छ्रैः कोटिशतैः स्वपापनिधनं यच्चाश्वमेधैः फलं ,
तत्सर्वं मणिकर्णिकास्नपनजं(जे) पुण्ये प्रविष्टं भवेत् ।
स्नात्वा स्तोत्रमिदं नरः पठति चेत् संसारपाथोनिधिं ,
तीर्त्वा पल्वल(ल्लव)वत् प्रयाति सदनं तेजोमयं ब्रह्मणः ॥ ६ ॥

COLOPHON : इति **श्रीविश्वेश्वराश्रमेण** विरचितं **मणिकर्णिका**स्तोत्रं सम्पूर्णम् ।

Post.-Colophonic : पठनार्थं शास्त्री-जगन्नाथ रणछोड इदं पुस्तकम् ।

## 1552. मणिकर्णिका-स्तोत्रम्

OPENING & CLOSING : Same as at no. 1551

COLOPHON : इति श्रीमच्छंकराचार्यविरचितं **मणकर्णिकास्तोत्रम्** सम्पूर्णम् ।

## 1553. महाकाली-कवचम्

OPENING : श्रीगणेशाय नमः ।

देव देव महाबाहो भक्तानां सुखवर्द्धनम्(नः) ।
केन सिद्धिं ददात्याशु काली त्रैलोक्यमोहिनी ॥ १ ॥

तन्मे वद दयापार साधकाभीष्टसिद्धये ।
कृपां कुरु जगन्नाथ वद देव विदांवर ॥ २ ॥

CLOSING :

इदं कवचमज्ञात्वा कालीं यो भजते नरः ।
नैव सिद्धिर्भवेत् तस्य विघ्नं तस्य पदे पदे ॥ २८ ॥

COLOPHON : इति **गन्धर्वतंत्रे महाकालीकवचं** सम्पूर्णम् ।

Post.-Colophonic : सं० १८७३ फाल्गुनमासे कृष्णपक्षे ७ शनौ मगनीरामेणालेखि स्वाध्ययनाय कृष्णगढे ।

## 1563. यमुना-स्तोत्रम्

OPENING : श्रीगणेशाय नमः । श्रीकृष्णाय तुभ्यं नमः ।

अयि कलिन्दसुते रतिरस्तु मे त्वयि सदा निखिलाघविमोचनी ।
तवः पयः पिबतां गलितांहसां न भवभीतिरिति श्रुतिविश्रुतम् ।। १ ।।

CLOSING : तरणिजा(जः)तव एष सुवल्लभानुगतबालमुकुन्दविनिर्मितः ।
भवतु गोकुलचन्द्रकृपादिना सुलभबालमुकुन्दसमर्पणम् ।। ११ ।।

COLOPHON : यमुनास्तोत्रं समाप्तम् ।

## 1572. रामरक्षा-स्तोत्र-टीका

OPENING : श्रीगणेशाय नमः । श्रीरामो जयति ।

नमस्कृत्य घनश्यामं रामं कामं यथामति ।
व्याख्यास्ये श्रेयसां सिद्धयै **वज्रपञ्जर**मादरात् ।। १ ।।

इदं किल वज्रपञ्जराख्यं स्तोत्रं विद्वदनुजिघृक्षया पररात्रौ स्वप्ने प्राप्य परमकारुणिकः कौशिकः त्रिविधतापतप्तमनसां पुंसां श्रेय[:]प्राप्तयेऽनिष्टनिवृत्तये च पठनीयत्वेनोपदिशति—ध्यात्वेत्यादिना ।

CLOSING : इदानीमी(मभी)ष्टचवि(व)शात् व्यक्तीबभूवेति सूचितः । तच्चरितमभिवीक्ष्य तन्निकटोपसर्पस्तत्करणीयं तत्रादि परिहाय सा(सं?) सूचयन्निरीक्षणमात्रं विगतदेहाभिमानजनितत्वोपचितीयति विदेहजा इत्यनेन दर्शयति ।

COLOPHON : इति श्रीमन्**महामुदगलभट्ट**कृतिरियं **रामरक्षाटीका** सम्पूर्णा ।

Post-Colophonic : संवत् १८३५ वर्षे माघ शुदि पंचम्यां तिथौ सोमे लिखितमिदं । श्रीश्रीभट्टारकश्री १०८ श्रीधीरकुशलसूरीश्वराणां पुस्तकम् । × × × लिखितं पं । प्रभाकुशलेन श्रीभुजनगरमध्ये ।

## 1587. वायुदेवस्तवव्याख्या

(सुवर्णमञ्जरी)

OPENING : श्रीलक्ष्मीनृसिंहाय नमः ।

नत्वा विष्णुं परं प्राणं **त्रिविक्रम**महाबुधान् ।
वायुदेवस्तवव्याख्यां त्वत्प्रसादात् करोम्यहम् ।। १ ।।
अनेकभावगम्भीरतया दूरावगाहता ।
यद्यप्यस्य प्रणीतार्थमेषा व्याख्यैव तन्यते ।। २ ।।

यहार्थरत्नाकरसुविहारोक्तिहेतुतः :
उपरम्यं परं भूयो न तद्राहिस (द्ग्राहित्व ?) हेतुतः ।। ३ ।।
अत्राऽयं प्रथमश्लोकः । श्रीमद्विष्णुरिति ।

CLOSING :
&
COLOPHON :

वायुदेवस्तवव्याख्या रूपीणि रोचयंसलम् ।
**सुवर्णमञ्जरी** जन्तून् **रामेणा**ऽकारि शोभना ।।

वायुस्तुतिटीका समाप्ता ।

## 1588. वासुदेवस्तुति-श्लोकः पञ्चार्थी-टीकोपेतः

OPENING :

श्रीकृष्णाय नमः ।

वासना वासुदेवस्य वासितं भुवनत्रयम् ।
सर्वभूतनिवासीनां वासुदेव नमोऽस्तु ते ।। १ ।।

बवयोरैक्यात् आ इति स्मरणे । कश्चिच्छाक्तिकः ईश्वरीं स्तौति—हे अम्ब तुभ्य नमः । तुभ्यमित्यध्याहारः । किं विधायै अस्तुतेन स्तुतिर्यस्याः सा अस्तुत् तस्यै अनिर्वचनीयाया इत्यर्थः ।

CLOSING :

इति शक्तिपक्षे । × × × × × इति रुद्रपक्षे । × × × × × इति भानुपक्षे । × × × × × इति कृष्णपक्षे । × × × × × किं पुनस्तव हे भगवन् ते त्वया वा भुवनत्रयं वासितहेतोः बंभणामि गोपिकास्तुतिपक्षे पञ्चार्थवाच्ययं श्लोकः ।। १ ।। श्रीः ।

## 1589. विवेक-धैर्याश्रय-स्तोत्रम्

OPENING :

विवेकधैर्ये सततं रक्षणीये तथाश्रयः ।
विवेकस्तु हरिः सर्वं निजेच्छातः करिष्यति ।। १ ।।

CLOSING :

एवमाश्रयणं प्रोक्तं सर्वेषां सर्वदा हितम् ।
कलौ भक्त्यादिमार्गा हि दुःसाध्या इति मे मतिः ।। २ ।।

COLOPHON :

इति विवेकधैर्याश्रयस्तोत्रम् ।

## 1590. विष्णु-स्तुति-टीका

OPENING :

श्रीगोकुलेशो जयति ।

भावप्रेमप्रणयः स्नेहो रागानुरागव्यसनानि ।
अङ्कुरकन्दलशाखा-पल्लवकलिकाप्रसूनफलानि ।। १ ।।

अथ श्रीमत्प्रभुचरणा हरेर्भावात्मकस्य शृङ्गारोत्तररसात्मकस्य स्वरूपं वैचित्र्यस्थितिसिद्धये तदन्यत्रागमनाय तदेकार्थतावगतये तत्पोष्यत्वाय तत्सेवनाद्यधीनवृद्धिमत्वाय तच्छायादिसर्वोपयोगित्वाद्यर्थं फलरूपत्वेपि वृक्षत्वेनैकेन पद्येन निरूपयन्ति—

भावैरङ्कुरितं महीमृगदशामाकल्यमासिञ्चितं ,
प्रेम्णा कन्दलितं मनोरथमयैः शाखाशतैः सम्भृतम् ।
लोल्यैः पल्लवितं मुदा कुसुमितं प्रत्याशया पुष्पितं ,
लीलाभिः फलितं भजे ब्रजवनीशृङ्गारकल्पद्रुमम् ।। १ ।।

CLOSING : तथा चैतादृशस्थलवर्तिवृक्षस्य प्रभोः स्वर्गस्थकल्पद्रुमतोप्यतिगूढतेति सर्वमवदातम् ।

एवं निजाचार्यतदात्मजात-पादाम्बुजाताश्रयमात्रचेतसा ।
निरूपितस्तत्कृतपद्यभावस्तेनात्मदासेति दयां दधीताम् ।

COLOPHON : इति श्रीहरिदासविरचिता भावैरङ्कुरितमिति पदव्याख्या समाप्तम् ।

## 1602. शिवमहिम्नः स्तोत्र-पञ्जिका

OPENING : श्रों स्वस्ति श्रीगणेशाय नमः ।

यामामनन्ति मुनयो भुवि तत्त्वनिष्ठा
वाचस्पतिप्रभृतयो दिवि देवमुख्याः ।
यां वा पिबन्ति सुतलेष्वपि काद्रवेया-
स्तां भारतीं त्रिपथगामिव तां स्मरामि ।। १ ।।

स्तोत्रराजे सुविस्तीर्णे दुर्बोधपदपञ्जिका ।
श्लोकपाठविशुद्धयर्थं क्रियते **पञ्जिका** मया ।। २ ।।

तुष्यते देवदेवेशः श्रीकण्ठः प्रभुरीश्वरः ।
भुक्तिमुक्ती न दूरस्थे शुद्धपाठवतां नृणाम् ।। ३ ।।

तस्मात् पञ्जिकया कृत्वा शुद्धस्तोत्रं पठेन्नरः ।
श्लोकपाठविशुद्धात्मा शिवलोके महीयते ।। ४ ।।

कश्चिद् दक्षिणापथे श्रीमान् शान्तिकर्णो नाम राजा । + + + + + किमुत भवान् अविज्ञाते चार्थे स्तुतिः क्रियमाणा न सदृशी भवति तत्कथं मां स्तोतुं आरभवान् (ब्धवान्) इत्याशंक्याह—महिम्नः पारं ते परमविदुषइत्यादि०

CLOSING : & COLOPHON : श्रीमत्प्रनाशपर्वतमुनितत्वावलम्बिना श्रीसद्धर्माभिचण्डोपाण्डप्रजायिना स्तोत्रराजस्य संक्षेपेणार्थः प्रकाशितोऽगमत् । पुण्यपाठविशुद्धयर्थं शुद्धपाठवतां सती । श्रीमत्कर्णप्रकाशव्यवहरणे महिमस्तोत्रविवरणपञ्जिका समाप्ता ।

Post-Colophonic : लिखितं दिलाराम ब्राह्मण संगु शुभं कल्याणं । वैशाख वदी सप्तम्यां बुधवासरे पोथी ब्रह्मभारथीदी पंजतीरथ मध्ये टीका महम्नदी ।

## 1603 शिवमहिम्नस्तोत्र-कल्पलता-टीका

OPENING : श्रीगिरिराजसुतापतिसूनवे नमः ।

ईशानं सर्वविद्यानांमीश्वरं पार्वतीपतिम् ।
भजामि श्रीमहादेवं सर्वदेवोत्तमं प्रभुम् ।। १ ।।

व्यालमालमनलामलभालं शूलपालममलामलशीलम् ।
कालकालमकलं कलयामो लोलपालमनुवेलमलीलम् ।। २ ।।

महेश्वराराधनदत्तशील: श्रीमन्महिम्नोऽर्थविचारलील: ।
अहोबल: पूजितकालकालो महिम्नटीकां तनुते सुशील: ।। ३ ।।

पुष्पदन्तनामा गन्धर्वविशेष: शिवैकशरणो भूत्वा शिवप्रसादार्थं हिमवत्पर्वते तप: कृत्वा । + + + + स्वानौद्धत्यं प्रकटयन् स्तोतुमारभते -- महिम्न: पारं ते० ।

CLOSING :

सद्भस्मरेखांकविशालभाल: शिवार्चनासादितचारुशील: ।
अहोबल: कीर्तितकालकालो महिम्नटीकामननोत्सवमूल: ।

COLOPHON :

इति श्रीमत्सकललोकप्रसिद्धश्रीमद्**भास्करवंश**रत्नमहोदधिसम्भूत-सकलविद्या-निधिभूत-श्री**मन्नृसिंहभट्ट**महोपाध्यायतनुजेन रामक्कागर्भसम्भूतेन अहोबलेन श्रीविश्वेश्वरचरणपरिभजनैकनिधानेन विरचिता श्रीमन्**महिम्नस्तवव्याख्याकल्पलता** सम्पूर्णम् ।

## 1607 शिवस्तोत्रम्

OPENING :

श्रीसरस्वत्यै नम: ।

शिव हरे शिव रामसखे प्रभो त्रिविधतापनिवारण हे विभो !
अज जनेश्वर यादव पाहि मां शिव हरे विजयं कुरु मे वरम् ।। १ ।।

CLOSING:

प्रातरुत्थाय यो भक्त्या पठेद् वा स्तोत्रमुत्तमम् ।
बीयो (विजयो) जायते तस्य विष्णुमाराध्यमाप्नुयात् ।। १३ ।।

COLOPHON :

इति **रामानन्दसरस्वती**विरचितं **शिवस्तोत्रं** संपूर्णम् ।

Post-Colophonic :

चैत्रमासे कृष्णपक्षे तिथौ ३ रविवाश्रान्युतायां संवत् १९२२ का । लिखितं कंठेश्वर चिरु जयलाल । कृष्णगढमध्ये । स्वाध्ययनाय ।

## 1610. शिवपराधक्षमास्तोत्रम् सटीकम्

OPENING :

श्रीशिवाय नम: ।

विश्वेश्वरं नमस्कृत्य सर्वप्रत्ययकारणम् ।
सुन्दरस्यापराधस्य टीकेयं लिख्यते मया ।। १ ।।

W.-OPENING :

वन्दे देवमुमापतिं सुरगुरुं वन्दे जगत्कारणं ।
वन्दे पन्नगभूषणं मृगधरं वन्दे पशूनां पतिम् ।
वन्दे सूर्यशशाङ्कवन्हिनयन वन्दे मुकुन्दप्रियं ,
वन्दे भक्तजनाश्रयं च वरदे(दं) वन्दे शिवं शङ्करम् ।।१।।

शं सुखं भवति अस्मादिति शम्भुर्विश्वनाथस्तस्य सम्बोधनं हे शम्भो ! मेऽपराध: क्षन्तव्य इत्यन्वय: ।

CLOSING & COLOPHON :

आयुर्नश्यति पश्यतां प्रतिदिनं याति क्षयं यौवनं ,
प्रत्यायान्ति गता[:] पुनर्न दिवसा कालो जगद्भक्षक: ।

लक्ष्मीस्तोयतरङ्गभङ्गचपला विद्युच्चलं जीवनं ,
तस्मान् मां शरणागतं शरणदः त्वं रक्ष रक्षाऽधुना । १५ ॥

इति श्रीशङ्कराचार्यविरचितं शिव-अपराधक्षमास्तोत्रं समाप्तम् ।

आयुरिति । हे शर[ण]द ! आमप्रद(आश्रयप्रद)तस्मात् कारणा[त्] अधुना शरणागतं मां त्वं रक्ष रक्ष । + + + + + तथा जीवितमपि विद्युदिव चञ्चलं अस्थिरं तस्मात् इत्युपसंहारः ॥ १५ ॥

**रामेन्द्रवन**शिष्येण **रामानन्देन** भिक्षुणा ।
**सुन्दरस्यापराधस्य टीके**ऽयं च कृता शुभा ॥ १ ॥

इति रामेन्द्रवनशिष्यरामानन्देन विरचितं अपराधक्षमास्तोत्रस्य व्याख्या[नं] समाप्तम् ।

Post-Colophonic : संवत् १९२७ वर्षे—मासे शुक्लपक्षे १४ तुर्दश्यां बुधवासरे लिपिकृत कवीश्वर चिरु॰ जयलालेन । अजयनगरमध्ये ।

## 1618: सरस्वती-स्तोत्रम्

OPENING :

कलमरालविहंगमवाहना सितदुकूलविभूषणलेपना ।
प्रणतभूमिरुहामृतसारिणी प्रवरदेहविभावरधारिणी ॥ १ ॥

CLOSING :

स्तवनमेतदनेकगुणान्वितं पठति यो भविकः प्रमदात् प्रगे ।
स सहसा मधुरैर्वचनामृतैर्नृपगणानपि रञ्जयति स्फुटम् ॥ १३ ॥

COLOPHON: इति **श्रीसरस्वतीस्तोत्रं** मन्त्रयुक्तं समाप्तं । अनुभूतिस्वरूपाचार्यकृतं स्तोत्रं-सम्पूर्णम् ।

Post-Colophonic : सं॰ १८९३ ना वैसाख सुद १० तिथौ सोमवासरे इदं संपूर्णम् ।

## 1619 सरस्वती-स्तोत्रम्

OPENING:

श्रीगणेशाय नमः ।

जलजनन्दनचन्दनचन्द्रमाः(मः)सदस(दृश)मूर्त्तिरियं परमेश्वरी ।
निखिलजाड्यजठोग्रकुठारिका दिशतु मेऽभिमतानि सरस्वती ॥१॥

CLOSING :

मलयकीर्त्तिकृतामतिसंस्तुतिं पठति यः सततं मतिमान्नरः ।
विजयकीर्त्ति गुरोः कृतमादरात् सुमतिकल्पलताफलमस्तु ते ॥ ९ ॥

COLOPHON:

इति सरस्वतीस्तोत्रं समाप्तम् ।

## 1622. सर्वोत्तम-स्तोत्रम्

OPENING :

श्रीकृष्णाय नमः ।

अथ सर्वोत्तमस्तोत्रं लिख्यते—

प्राकृतधर्मानाश्रयमप्राकृतनिखिलधर्मरूपमिति ।
निगमप्रतिपाद्यं यत्तच्छुद्धं साकृति स्तौमि ॥ १ ॥

कलिकालतमश्च्छन्नदृष्टित्वाद् विदुषामपि ।
संप्रत्यविषयस्तस्य माहात्म्यं समभूद् भुवि ॥ २ ॥

CLOSING : तदप्राप्तौ वृथामोक्षस्तदाप्तौ तद्गतार्थता ।
अतः सर्वोत्तमं स्तोत्रं जप्यं कृष्णरसार्थिभिः ॥ ३५ ॥

COLOPHON : इति श्री**मदग्निकुमार**प्रोक्तं **सर्वोत्तमं** स्तोत्रम् ।

## 1642. स्तोत्रादिसंग्रहः

OPENING : × × × × हिरण्मयेन सुवीता रथं नो । देवो याति भुवनानि पश्यन् ॥१७॥

CLOSING : × × × × मृडयंतु तेयंद्विषमो पुष्ण नो द्वेष्टि तमेषां जं भेद धम ॥ ६६ ॥

(On f. 12) × × ×

(On f. 14) × × × मपायुषेन्नाद्याय सुवीर्याय ।६। यदभू नमसते ॥ १६ ॥

× × ×

(On f. 17) तुत्र सो पवत्रेण सुधाकाम मधुक्षीय । अघ पांचं आंव ।

× × ×

अकासलोके भवेद् राजा पाताले धनसम्पदा ।
मृतलोके भवेन्नास्ति ये ते मूलकारीजा ॥

## 1646 दत्तात्रेयपूजापद्धतिः

OPENING: श्रीगणेशाय नमः ।

श्रीपार्वत्युवाच—

किरातरूपी भगवान् कदाचिद् गिरिजापतिः ।
कदाचिदिष्टलाभेषु पार्वत्या पृष्ट ईश्वरः ॥ १ ॥

तत्तत् श्रुतानि सर्वाणि मन्त्रजालानि कृत्स्नशः ।
आदावर्धपटीमन्त्रत्(न्त्रान्) पश्चाद्भू(द्रु)द्रसागरी ॥ २ ॥

CLOSING : मन्दारमूले मणिपीठसंस्थं सुवर्णदाम्नैकनिबद्धवेदिम् ।
ध्यायेत् परीतं नवनाथसिद्धैर्दारिद्रदावानलनाशमेधम् ॥ २५ ॥

COLOPHON ; इति श्री**भैरवयामले दत्तात्रेय-पूजा**पद्धतिः समाप्तम् ।

Post-Colophonic : लिखितं व्यंकटेश मातापुरवासिनः ।

## 1650. अर्थरत्नावली

OPENING: (वामकेश्वरतन्त्र-चतुःशतीटिप्पणम्)

श्रीगणेशाय नमः ।

श्रीमन्महावनेशान-पादपङ्करुहद्वयम् ।
योगीन्द्रमधुपव्रातसेवितं सर्वदा भजे ॥ १ ॥

प्रियानन्दमहं वन्दे सदानन्दप्रकाशितम् ।
प्रपन्नजनता दुःख-ध्वान्तविच्छेदभास्करम् ॥ २ ॥
आद्यं मिथुनमारभ्य स्वगुर्वन्तं क्रमेण तु ।
वन्दे गुर्वौ घमीशान्याः करुणातरुणीं.. या ॥ ३ ॥
यत्पादाम्बुजसम्भूतं रजो विमलयन् मनः ।
प्रसादं तनुते मह्यं रत्नेशं गुरुं भजे ॥ ४ ॥
शिवं कामेश्वरीं सिद्धान् त्रिविधानपि दम्पतीन् ।
कङ्कालप्रभृतीन् वन्दे गुरून् कल्याणरोचिषः ॥ ५ ॥
गणनाथमहं वन्दे विश्ववन्द्यैः प्रपूजितम् ।
सर्वविघ्नौघनाशार्थं सर्वाभीष्टफलाप्तये ॥ ६ ॥
बटुकं योगिनीवृन्दं भैरवानमितौजसः ।
प्रणमामीष्टसंपत्ति-सम्पादनसमुत्सुकान् ॥ ७ ॥
मन्त्रमण्डलवर्णात्[त्म] प्ररूपिणीं करुणापराम् ।
धामसंवित्स्वरूपां तां वन्दे त्रिपुरसुन्दरीम् ॥ ८ ॥
सम्प्रदायान्वयज्ञेन विमलाख्यात्मशंभुना ।
क्रियते टिप्पणं सम्यक्, **वामकेश्वरशास्त्रगम्** ॥ ९ ॥
**अर्थरत्नावलीत्येषा** ख्यातास्तु भुवनत्रये ।
भुवनेश्वरि ते भक्त्या क्रियते **टिप्पणं** मया ॥ १० ॥

प्रारिप्सितग्रन्थस्याविघ्ने (घ्न) परिसमाप्त्यर्थं विशिष्टलाभाय च परमकारुणिको भगवान् लोकानुग्रहं चिकीर्षुः बहुरूपाष्टकं शास्त्रं संक्षिप्य **चतुःशत**संख्यापरिमितैः ग्रन्थैः तत्सारमुद्धर्त्तुकामः तच्छास्त्रप्रतिपाद्यां वर्णावयवां महात्रिपुरसुन्दरीं महत्या भक्त्या महादेवः प्रणमति । गणेशग्रहनक्षत्रेत्यादिना ।

CLOSING & COLOPHON : इति श्री**विद्यानन्द**विरचिते **चतुःशतीटिप्पणे अर्थरत्नावल्यां** त्रिपुराजयहोमोपदेशः पञ्चमः पटलः ।

## 1651 कालीपटलः

OPENING : श्रीगणपतये नमः ।

कैलासशिखरासीनं देवदेवं जगद्गुरुम् ।
उवाच पार्वती देवी भैरवं परमेश्वरम् ॥ १ ॥

पार्वत्युवाच–

देव देव महादेव सृष्टिस्थितिलयात्मकः ।
किं तद् ब्रह्ममयं धाम श्रोतुमिच्छामि तत्त्वतः ॥
कालिकाया महाविद्या समस्तभेदसंयुता ।

CLOSING :

यथा मर्त्यो न लभते यथाकार्यं महेश्वरि !
यो भक्तः साधको ज्ञानी तस्मै सत्यं प्रकाशयेत् ॥

COLOPHON : इति **कालीपटलः** सम्पूर्णः ।

## 1651. श्यामापद्धतिः

OPENING :

श्रीमद्दक्षिणकालिकायै नमः।

अथ **श्यामापद्धतिप्रारम्भः**—ब्राह्मे मुहुर्ते उत्थाय मुक्तशापोऽन्यद्वासः परिधाय मृद्वासन उपविश्य स्वशिरसि अधोमुखसहस्रदलकमलकर्णिकायां०।

CLOSING :

ततो मूलेन अष्टोत्तरशताभिमन्त्रितपुष्पचन्दनं धृत्वा त्रैलोक्यं **वशमानयेदिति श्यामापद्धतिः**।

COLOPHON :

श्रीमद्**दामोदरानन्दनाथ**कृतेयं पद्धतिः।

धन्योऽस्मि कृतकृत्योस्स्मि जीवनन्मुक्तोऽस्मि भो गुरो।
तव पादाम्बुज[मा]श्रित्य मधुपोऽास्म त्वितस्ततः।

इति संप्रार्थ्य यथासुखं विहरेत्।

इति श्यामापद्धतिः सम्पूर्णम्।

## 1655. कोष्ठयुद्धनिर्णयचक्रम्

OPENING :

ओं नमः।

अथातः संप्रवक्ष्यामि **कोष्ठयुद्धस्य निर्णयम्**।
स्तोकारिः कुरुते यत्र भूरिसैन्यपराभवम्॥ १॥
यस्याश्रयकला देवा राज्यं कुर्वन्ति भूतले।
विग्रहं चतुराशा[सु] सुशीलैः शत्रुभिः सह॥ २॥

CLOSING:

वज्रार्गलविधानं तु कीर्त्तव्यं दुर्गरक्षणे।
भञ्जने यमराजाख्यं इत्युक्तं ब्रह्मयामले॥ ८०॥

COLOPHON :

इति कोष्ठचक्रं समाप्तम्।

## 1683. कौलकुतूहलम्

OPENING:

श्रीगणाधिपतये नमः। श्रीसर्वज्ञै नमोनमः।

वन्दे गुरुं ज्ञानमयप्रकाशं मुक्तिप्रदानं भवभोगहेतुम्।
चिच्छक्तियुक्तं वरदाभयाढ्यं भव भवानीसहितं नमामि॥

शारदातिलकेषु—

निर्गुणः सगुणश्चेति शिवो ज्ञेयः सनातनः।
निर्गुणः प्रकृतेरन्यः सगुणः सकलः स्मृतः॥ २॥

CLOSING & COLOPHON :

इति श्री**कौलकुतूहले द्वारपूजा**निर्णयो नाम उल्लासः।

अथ पूजासङ्कल्पं कुर्यात्। × × × × ×

कर्मणे वहूनिताराऽपि विय(प)त्प्रायाः समीरिताः।
आग्नेयाः मनवः सौम्या भूय(म्य)ष्टेंद्वमृताक्षराः॥
आग्नेयाः संप्रबुध्यन्ते…………

## 1684. क्रमदीपिका सटीका

OPENING : (On f. 6)

उक्तानि स्यात् यादिभिः सप्तधातून् प्राणं जीवं क्रोधमप्यात्मने तान् ।। २४ ।।

पूर्वोक्तकेशवादिमूर्तिकीर्त्यादिशक्तिन्यासप्रकारं दर्शयति-वर्णानुक्तेति । पुरस्तात् प्रथमं वर्णा[न्] अकारान्तान् उक्ता । कथंभूतान् सार्द्धचन्द्रान् अनन्तरं मूर्तिः केशवाद्याः शक्तिः कीर्त्याद्याः ङेवसानाः चतुर्थ्यन्ताः । नतिं नमः पदं चोक्त्वा पूर्वोक्तमातृकास्थानेषु न्यसेत् ।

CLOSING : & COLOPHON :

जनमिममनुविद्धायनस्मात् प्रसूते पदनुततमजस्रं पाति बाधितायम् ।
यदुरमह उदर्च्चिर्यं विधत्ते च गोपी तममनुसुखबोधं ज्योतिषं नौमि कृष्णम् ।।

अदावन्ते च कृतमङ्गलानि शास्त्राणि पृथ्व्यन्त इत्यन्तेपि मन्त्रार्थरूपपरदेवता-प्रणतिलक्षणं मङ्गलमापादयति–जनमिममिति ।

इति **श्रीक्रमदीपिकायां केशवभट्ट**विरचितायां प्रयोगविधानोपसंहारो नामाष्टमः पटलः ।

दुष्टतमः कश्चित् समग्रन्थचोरचतुरमिमं ग्रन्थं उपलभ्य अस्य नामान्यथा कर-यित्वा यद्ययं प्रबन्धः कृतः इति स्वपाण्डित्यं प्रकटयेत् इति मन्वानः प्रबन्धः कृतः लोके गुप्तबन्धे व्यक्तस्वनामग्रन्थनाम च दर्शयति—यश्चक्रमिति । यः प्रभुः कृष्णः स्वतन्त्रः × × × × × × × दूरीकृताऽतिवृष्टयाद्युपद्रवं । उक्तम्०

## 1685. तन्त्रमण्डनम्

OPENING :

**श्रीगुरुभ्यो नमः ।**

प्रणम्य सम्यग् गुरुपादपङ्कजे सहस्रपत्रान्तरसप्तसङ्गमे ।
उच्चित्य **चूडामणि**नागमादिदं विधीयते···मण्डनं मुदा ।।

CLOSING :

इति कालीतन्त्रवचनादित्यन्यथा गौरवभयान्नास्मास्मिर्भिलिखितम् ।

आलोक्य तन्त्राणि विभाव्य मार्गं शैवेश्वराणी (णां) गदितं गुरूणाम् ।
**चूडामणौ** यल्लिखितं मिताक्षरं तत्साधकानां वितनोतु मोदम् ।।

## 1686. तन्त्रराजः

OPENING :

अथ तन्त्रराज लिख्यते—

यः शान्तः परमद्वयापरशिवः कङ्कालकालान्तरे,
क्रोधाद्धांतमनादिनित्यनिचयः सङ्कल्पसङ्कोचकः ।
आभासांतरभास······यकरं सर्वात्सतां बोधकः,
सोऽयं सर्वमयो ददातु जगतां विद्यादिसिद्धयष्टकम् ।।१।।

CLOSING :

अदृशो(श्यो) जायते सत्यं देवैरपि न दृश्यते ।
एते सर्वे महायोगाश्चण्डामन्त्रेण सिद्धिता(दाः) ।। ६१ ।।

COLOPHON

इति **श्रीपार्वतिपुत्रनित्यनाथसन्निधौ रामचंद्रसिद्ध**विरचिते सिद्धखण्डे अमृतसां मृतसञ्जीवनादिकक्षपुटीनाम सप्तमोद्देशः ।। ७ ।।

## 1687. तन्त्रसारः

OPENING : श्रीगणेशाय नमः ।

नत्वा कृष्णपदद्वन्द्वं ब्रह्मादिसुरवन्दितम् ।
गुरुं च ज्ञानदातारं **कृष्णानन्देन** धीमता ॥

तत्तद्ग्रन्थकृतां वाक्यान्नर्थान् प्रतिपाद्य च ।
सौकर्यार्थं च संक्षेपात् **तन्त्रसारः** प्रतन्यते ॥

CLOSING : **श्रीकृष्णानन्दवागीश-भट्टाचार्यस्य** सङ्ग्रहम् ।
तज्ज्ञा अधीतशास्त्राणि धीराध्याये तु साम्प्रतम् ॥

COLOPHON: इति **महोपाध्यायश्रीकृष्णानन्दवागीशभट्टाचार्यकृत-तन्त्रसारं** समाप्तम्

Post-Colophonic : संवत् १७३४ समै फाल्गुण सुदी ।

## 1688. पुरश्चरण-पद्धतिः

OPENING : श्रीगणेशाय नमः । श्रीगुरुं भजे ।

शिवादींश्च गुरून्नत्वा **पुरश्चरण**मुच्यते ।
विना न येन सिद्धिः(द्धः) स्यान्मन्त्रो वर्षशतैरपि ॥ १ ॥

इत्यवश्यकता अस्य सम्प्रति ततः संक्षेपतस्तद्विधिं वक्ष्ये ।

CLOSING : नानाग्रन्थान् समालोक्य श्रीमान् **गोपीनाथः** कृती ।
**पुरश्चर्याविधिं** सम्यक्-साधकार्थमचीकरत् ॥

COLOPHON: इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्गोपालाश्रमपूज्यपादकृपाकटाक्षासादित-परमानन्दैकरस शैवमाधवपाठकाग्निहोत्रिसूतशैव**गोपीनाथ**पाठकाग्निहोत्रिविरचितः **पुरश्चरणविधिः** समाप्तः ।

Post-Colophonic : सँवत् १९१६ ना फागण विद ८ अष्टम्यां भृगुवासरे लि० दैवे श्री ५ लिलाधरसुत रेवाशंकरेण मिदं पुस्तं स्वार्थे ।

## 1691. मन्त्रमहोदधिः नौका-टीका-सहितः

OPENING: श्री गणेशाय नमः ।

नत्वा लक्ष्मीपतिं देवं **स्वीये मन्त्रमहोदधौ** ।
**नावं** विरचये रम्यां तरणाय गुणैर्युताम् ॥ १ ॥

तत्र तावत् मन्त्रमहोदधिनामकं तन्त्रं चिकीर्षुराचार्यः शिष्टाचारपालनाय निर्विघ्न-ग्रन्थसमाप्तये चेष्टदेवनमनपूर्वकं ग्रन्थकरणं प्रतिजानीते-प्रणम्येति ।

प्रणम्य लक्ष्मीनृहरिं महागणपतिं गुरुम् ।
तन्त्राण्यनेकान्यालोक्य वक्ष्ये **मन्त्रमहोदधिम्** ॥ १ ॥

CLOSING: & COLOPHON:

अब्दे विक्रमतो जाते बाणवेदनृपैर्मिते।
ज्येष्ठाष्टम्यां शिवस्याग्रे पूर्णो **मन्त्रमहोदधिः** ॥ १३२ ॥

इति श्रीमन्महीधरविरचिते **मन्त्रमहोदधौ** षट्कर्मादिनिरूपणं पञ्चविंशस्तरङ्गः ॥ २५ ॥ समाप्तोयं मन्त्रमहोदधिग्रन्थः सं ४५०० ।

**अथ ग्रन्थनिष्पत्तिकालमाह—**

विक्रमार्कादिति। वाणवेदनृपैर्मिते वर्षे पञ्चचत्वारिंशत् उत्तरषोडशतमे विक्रमनृपाद्गते सति शिवस्य रामेश्वरस्य अग्रे मन्त्रमहोदधिः समाप्तिमगमत् ॥ १३२ ॥

इति श्रीमन्**महीधर**विचितायां **मन्त्रमहोदधिटीकायां नौका**समाख्यायां षट्कर्मादिनिरूपणं पञ्चविंशस्तरङ्गः ॥ २५ ॥

..........................समाप्तोऽयं मन्त्रमहोदधौ नौकायां ग्रन्थः।

## 1692. मुद्राप्रकरणम्

CPENING:

**अथ मुद्रा**—तास्त्वंकुशमुद्रा कुम्भमुद्राग्निप्रकारमुद्रा ऋष्यादिन्यासमुद्रा गालिनीमुद्रा धेनुमुद्रा शङ्खमुद्रा योनिमुद्रा मत्स्यमुद्रा आवाहनादिनवमुद्राः। गणेशस्य सप्तमुद्राः शाक्ता दशमुद्राः। गायत्र्या द्वात्रिंशन्मुद्राः। वैष्णव्येकोनविंशतिमुद्राः। सौरद्विमुद्रा। शैवदशमुद्राः।

CLOSING:

अन्तरङ्गुष्ठमुष्टया तु निरुद्धा तर्जनीमिमाम्।
रिपुजिह्वाग्रहा मुद्रा न्यासकाले तु सूचिताः॥

इति मुद्राप्रकारः।

COLOPHON:

इति श्री**शिवार्चनचन्द्रिकायां मुद्राप्रकरणम्**।

Post-Colophonic:

संवत् १८९१ भाद्रपदमासे कृष्ण ३ गुरौ मगनीरामेणालेखि अजमेरमध्ये। सेठजी श्रीगंभीरमलजीकस्य पुस्तकात् स्वयमपि लिखितम्।

## 1693. मुद्रालक्षणम्

OPENING:

अथ **ब्रह्माण्डपुराणे मुद्रालक्षणम्—**

कलौ पापैकबहुले धर्मानुष्ठानवर्जिते।
नामानुकीर्तनं मुक्ता(क्त्वा)नृणां नान्यत्परायणम्॥

इति। अथ मुद्रालक्षणम्—

CLOSING:

मध्यमे कुटिलाकारतर्जन्युपरिसंस्थिते।
अनामिकामध्यगते तथैव हि कनिष्ठिके॥
सर्वा एकत्र संयोज्या अंगुष्ठोपरिपातिताः।
एषा तु प्रथमा मुद्रा योनिमुद्रेति या स्थिता॥ ६ ॥

COLOPHON:

इति नवमुद्रालक्षणम्

## 1694. यन्त्रचिन्तामणिः

OPENING :

श्रीगणेशाय नमः ॥

यं ध्यायन्ति सुरासुराश्च निखिला यक्षा पिशाचोरगाः
राजानश्च तथा मुनीन्द्रनिवहाः सर्वार्थदासिद्धये ।
भक्तानां वरदाभयौ द्वयकरं पाशांकुशालङ्कृत ,
चञ्चच्चामरवीज्यमानमनिशं सोऽहं श्रये शङ्करः ॥ १ ॥

× × ×

**जालन्धरे पीठवरे** प्रसिद्धे प्रत्यक्षरूपा भुवि वर्तते या ।
गोत्रे तस्मिन् वेदविद्याप्रवीणे योन्वीयेषांन्नास्तिकाश्वेदबाह्यान् ॥ ४ ॥

तदन्वये पण्डितस**न्नृसिंहो** ज्वालामुखीं नौमि महाप्रभावाम् ।
यां योगमायां परमार्थविद्यां विशेषपूज्यां **भृगुवंश**जानाम् ॥ ५ ॥

तस्यात्मजोऽभूद् भुवि धर्मशीलो नाम्ना **महादेव** इति प्रसिद्धः ।
नैसर्ज[र्ग]वैर प्रजहुः सुसत्वा यां प्राप्य दुष्टा हितरक्षकाद्याः ॥ ६ ॥

तस्मादासीत् सुमतिविकसः **देवदत्तः** कलावान्,
मान्यो राज्ञां सदसि विदुषां गद्यगङ्गाप्रवाहः ।
उत्कल्लोलं दिशि दिशि जनाः कीर्तिपीयूषसिन्धुं ,
यस्याद्यापि श्रवणपुटकैः कुञ्चिताक्षाः पिबन्ति ॥ ७ ॥

**गङ्गाधर**स्तत्तनयो बभूव विवेकगाम्भीर्यगुणैरुदारैः ।
यं प्राप्य लक्ष्मी च सरस्वती च तत्पादयुग्मं स्थिरतां न नूनम् ॥८॥

**दामोदरः** सर्वकलाप्रवीणः तस्मादभूच्छ्रीगणनाथभक्तः ।
लब्धप्रतिष्ठो गुरुदेवभक्तो मान्यः सतां धर्मपरायणोऽयम् ॥ ९ ॥

दृष्ट्वानेकशिवागमांश्च बहव(हुश)श्चालोक्य सौरागमान् ,
देवीकल्पमहागमांश्च विविधानालोक्य विस्तारतः ।
कर्त्तुं वाञ्छितसङ्ग्रहः स मतिमान् **दामोदरः** सुन्दरं ,
लोकानां हितकारि यत्र निकरैर्मन्त्रेण युक्तैः स्फुटम् ॥१०॥

प्रेरितश्चन्द्रचूडेन स्वप्नदृष्टेन मद्द्विजः ।
चकार कल्पयन्त्राणां चिन्तामणिमिति स्फुटम् ॥ ११ ॥

CLOSING :

आकर्षणं स्तम्भनकं तृतीयं विद्वेषणं मारणकं ततश्च ।
उच्चाटनं शान्तिकरञ्च सप्तमं बन्दिप्रसादजनकं तु महाप्रभावः ॥१॥

मत्यन्त उच्चाटनकं वदन्ति अष्टाधिकारं प्रवदन्ति कल्पः ।
चिन्तामणौ देववचं[रः] सुपूजितः स्वर्गे च तस्य बहुभाग्यसुतस्य पुंसः ॥२॥

ण्याधिकस्य बहुयोगयुतस्य लोके प्राप्तिर्भवेत् कल्पलतास्य तस्य ।
नार्चितो देववरो महेशः श्रीयन्त्र**चिन्तामणि** येन भाषितम् ॥३॥

COLOPHON : इति श्री**यन्त्रचिन्तामणौ** प्रत्यक्षसिद्धिप्रदे उमामाहेश्वरसम्वादे **दामोदरपण्डितोद्धृते** सप्तमपीठिका सम्पूर्णा: । समाप्तोऽयं यन्त्रचिन्तामणिग्रन्थः ।

Post.-Colophonic : संवत् १७४३ वर्षे आषाढसुदि ३ दिने लिखितेदं शास्त्रं पण्डित-भाग्यसमुद्रेण स्वकौतुकाय श्रीमेडतानगरे ।

## 1698 श्रीविद्याक्रमपद्धतिः

OPENING : श्रीगणाधिपतये नमः । श्रीमहात्रिपुरसुन्दर्यै नमः । श्रीगुरुभ्यो नमः ।

गुरुं गणपतिं दुर्गां बटुकं शिवमच्युतम् ।
ब्रह्माणं गिरिजां लक्ष्मीं वाणीं वन्दे विभूतये ॥ १ ॥

वन्दे श्रीगुरुनाथपादयुगलं वन्दे गणानां विभुं,
विद्यादानविशारदां शशिमुखीं श्रीशारदाम्बां तथा ।
**श्रीविद्याक्रमपूजनं** लघुतरं पूर्वे प्रमाणं सतां,
बालानां व्यवसायिनां क्रमरतां सद्भक्तियुक्तात्मनाम् ॥२॥

तत्रादौ विद्योद्धारः तन्त्रराजे०—।

CLOSING : ततः परं योगिनीभिर्वृतः किञ्चित्कालं नीत्वा मिश्रचरणविद्यया स्वात्मानं सच्चिदानन्दमयं परामृश्य सुखी भूयादिति शिवम् ।

**क्रमोत्तमे** यथाशक्तानां मनुना गणनाक्रमम् ।
अजीगण**न्निजात्मा**सौ सुन्दरीत्रिपुराक्रमम् ॥

COLOPHON : इति श्री**निजात्मानन्द**विरचितायां **क्रमोत्तमाख्यायां श्रीविद्यापद्धतौ** पूजाविवरणं नाम चतुर्थोल्लासः श्रीमत्त्रिपुरसुन्दर्यर्पणमस्तु ।

Post-Colophonic : शके १६९० सर्वधारिनामसंवत्सरे उदयने वसन्तऋतौ वैशाखमासे कृष्णपक्षे चतुर्थ्यां तिथौ गुरुवासरे मूलनक्षत्रे शिवयोगे बालवकर्णे तद्दिने व्यंकटेशात्मज त्र्यम्बकेन ग्रन्थ लिखितं समाप्तिमगमत् ।

## 1700. सौभाग्यरत्नाकरः

OPENING : श्रीगणेशाय नमः ।

प्रारम्भे भरणे भङ्गे यन्मदस्यंदबिन्दवः ।
कारणानि प्रपञ्चस्य तं[वं]द[दे]वारणाननम् ॥ १ ॥

सच्चिदानन्दनाथाङ्घ्रि-सरोरुहयुगं भजे ।
यत्कटाक्षक्षणोत्क्षेपाच्छिवोहं पञ्चकृत्यकृत् ॥ २ ॥

प्रकाशरूपा प्रथमे प्रयाणेऽमृतरूपिणी ।
प्रतिप्रयाणे तामन्तःपदव्यां चित्कलां भजे ॥ ३ ॥

आलोक्य सर्वतन्त्राणि यामलादीन्यशेषतः ।
ज्ञात्वा गुरुमुखात्तेषां रहस्यार्थांश्च तत्त्वतः ॥ ४ ॥

सच्चिदानन्दनाथांघ्रि-सरोजद्वयषट्पदः ।
श्रीविद्यानन्दनाथोऽहं वीतरागो विविक्तधीः ॥ ५ ॥

विचरन् मेदिनीमेनां विद्वद्भिर्विमलात्मभिः ।
प्रयागे प्रार्थितः प्रीत्यै तेषां लोकहिताय च ॥ ६ ॥

पञ्चस्रोतपथोऽगाधं तन्मणिमन्त्रसङ्कुलम् ।
समस्तयोगिनीचक्र-प्रवाललतिकोज्ज्वलम् ॥ ७ ॥

नित्यामण्डलपूर्णेन्दु-ज्योत्स्नाजालविजृम्भितम् ।
नवचक्रमहाद्वीपं न्यासजालतरङ्गकम् ॥ ८ ॥

श्रीनाथपादुकापोतं चतुर्वर्गफलामृतम् ।
प्रकाशयामि **सौभाग्यरत्नाकर**मिति स्फुटम् ॥ ९ ॥

श्रीविद्यायाः सभेदाया नित्यनैमित्तिकार्चनम् ।
काम्यार्चनं च दीक्षाङ्गभूतं प्राच्यादिसाधनम् ॥ १० ॥

दीक्षाभेदः पुरश्चर्या तत्कर्मनियमादिकम् ।
काम्यहोमविधिश्चैव सौम्यक्रूरविभेदतः ॥ ११ ॥

समस्तव्यस्तविद्याया यद्यत्काम्यफलोदयः ।
सदाचारादिकं चैव लिख्यते रत्नवारिधौ ॥ १२ ॥

CLOSING : इति गदितमशेषं त्रैपुरब्रह्मविद्या-
यजनजपहुतानां शास्त्रदृष्टं विधानम् ।
गुरुचरणसरोजाराधनाकाम्यमेतत् ,
पशुषु परमगोप्या भाविता सिद्धसङ्घैः ॥ १ ॥

श्रीविद्यातत्त्ववेत्ता जगति करुणयो पातका यः शिवो यः ,
स श्रीमान् सुन्दराख्यः क्षितिसुरतिलकः **सच्चिदानन्दनाथः** ।
तच्छिष्यः **श्रीनिवासो** द्रविडविषयजस्तत्प्रसादाप्ततत्त्वः ,
**श्रीविद्यानन्दनाथः** परशिववचसां भाववेत्ता विधाय ॥ २ ॥

**सौभाग्यरत्नाकर**नामधेयं सौभाग्यविद्यादिसुमन्त्ररत्नः ।
अलङ्कृतं ग्रन्थतरं तरङ्गैः सुशोभितं शैवसुतत्वसंख्यैः ॥ ३ ॥

अध्यापयन्नात्मविदात्मशिष्यानभ्यर्थितोऽन्यैरपि तानदुष्टान् ।
क्षेत्रे विमुक्ते शिवराजधान्यामास्ते निजाराध्यनिदेशवर्ती ॥ ४ ॥

यथा पित्रोर्मुदे भूयादाशीलपरिभाषितम् ।
बालस्य महतामस्तु ममापि भणितं तथा ॥ ५ ॥

त्यक्त्वा कुलं कुलवधूः पुरमध्यवीथ्यां
गत्वा कुलं मधु निपीय यथेप्सितं या ।
मत्ता परं पुरुषमेत्य तदीयसङ्गात् ,
तुष्टा पुनः स्वकुलमेति पुनातु सा नः ॥ ६ ॥

श्रीविद्यानन्दनाथेन शिवयोः प्रियसूनुना ।
कृते सौभाग्यरत्नाब्धौ षट्त्रिंशोगात्तरङ्गकम् ॥ ७ ॥

COLOPHON : इति **श्रीसच्चिदानन्दनाथ**चरणारविन्दद्वन्द्वान्तेवासिना श्री**श्रीविद्यानन्दनाथेन** कृते **सौभाग्य रत्नाकारे** षट्त्रिंशत्तरङ्गः समाप्तः । समाप्तोऽयं सौभाग्यरत्नाकरः ।

Post-Colophonic : संवत् १८६५ आषाढसुदि ७ सप्तम्यां भृगुवासरे लिख्यतां जवांनकुसल श्री अजमेरगढनयरे ।

## 1728. कृष्णपूजापद्धतिः

OPENING : श्रीगणेशाय नमः ।

अथ विष्णुपूजनं लिख्यते—श्रीकृष्णगुरुप्रीत्यर्थं षडङ्गन्यास-वरुणपूजनपूर्वकं ध्याना-ऽऽवाहनादि यथा मिलितोपचारद्रव्यैः श्रीकृष्णपूजनमहं करिष्ये ।

CLOSING : इत पूर्वं प्राणबुद्धिदेहधर्माधिकारतो जाग्रत्स्वप्नसुषुप्तिअवस्थासु मनसा वाचा कर्मणा हस्ताभ्यां पद्भ्यां उदरेण शी-यत् स्मृतं । यदुक्तं यत्कृतं तत्सर्वं श्रीकृष्णा-र्पणमस्तु ।

COLOPHON ; इति श्रीमत्परमहंसपरिव्राजकाचार्य-**श्रीकृष्णाश्रम**भगवत्पूज्यपादपूजकशिष्य-**श्रीधराश्रमेण वैष्णवतन्त्रोद्धारितश्रीकृष्णपूजापद्धतिः**समाप्तः ।

Post-Colophonic लि. गोवर्द्धन १८४२ कार्तिकसुद १०

## 1731. गणसिद्धिप्रकारः

OPENING : श्रीराधावल्लभो जयति ।

अथ **गण सिद्धिप्रकारः** भरतसूत्रात् । तत्रादौ मगणविचारः । मन्त्रः—ॐ श्रीं श्रीं लँ मगणगणाय नमः । अस्य मन्त्रस्य जापः १३००००० त्रयोदशलक्षं कमलबीजस्य मालया आषाढे शुक्ले तीज ३ अष्टमी ८ त्रयोदश्यां १३ भौमवारे दिवसे चतुर्थप्रहरे पीतवस्त्रं परिधाय पूर्वे मुखं कृत्वा जपेत् ।

CLOSING : अथ सर्वगणस्य प्रकारः । शान्तरसस्य सर्वे गणाः । मार्गशीर्ष-पोष-माघ-फाल्गुन-मासाः सर्वे गणानां पञ्चमी ५ दशमी १० पूर्णिमा १५ अमावास्या ०० सर्वे गणानां तिथिः शेषविधिः सर्वपूर्ववत् ॥

## 1746. तारानित्यपूजाविधिः

OPENING : श्रीगणेशाय नमः ।

तारां त्रैलोक्यसारां जडहृदयतमोदीपमालावतारां
वीरां वीरेन्द्रवेश्मांगणभुवि विलसत् कल्पवल्लीमुदाराम् ।
नालां नीलाब्जहारां कविवरवदने वर्णवाक्यार्थधारां
सर्वां सर्वार्थदात्रीं विविधविधरैर्भूषिताङ्गीमुपास्ये ॥ १ ॥

सर्वाम्नायरहस्यानां ज्ञानदं वरदाननम् ।
श्रीविद्यानन्दनाथाङ्घ्रियुगं शिरसि धारयन् ॥ २ ॥

नित्यानन्दः साधकानां सिद्धये रचयत्यसौ ।
ताराकल्पलतानाम्नीं पद्धतिं सकलार्थदाम् ॥ ३ ॥

न विस्तृतां न गूढार्थां स्वतंत्रोक्तक्रमोत्कटाम् ।
नित्यनैमित्तिके काम्ये कर्मण्यचिरसिद्धिदाम् ॥ ४ ॥

कृतसंज्ञाऽत्र मन्त्राणां श्रुतीनां संहितादिभिः ।
ताराविद्योपयुक्तानां स्वतन्त्रमिति लाघवात् ॥ ५ ॥

निःसन्दिग्धः स्वतन्त्रस्थो यथा तातो गुरोर्मुखात् ।
ध्यानं स्तुतिः तथाचारो मन्त्रोद्धारः फलं तथा ।
मयाऽन्यत् सकलं श्लोकैः स्वतन्त्रोक्तैर्विलिख्यते ॥ ७ ॥

CLOSING : ततो मूलविद्यया प्राणायामत्रयं ऋष्यादिकरषडंगन्यासांश्च कृत्वा श्रीगुरुं प्रणम्य मूलेन निर्माल्यं शिरसि धृत्वा नैवेद्यादिकं भक्तेभ्यो दत्वा स्वयं भुक्त्वा स्वात्मानं देवीरूपं भावयन् सुखं विहरेत् । इति श्रीमदुग्रतारानित्यपूजाविधिः ।

COLOPHON : इति **श्रीविद्यानन्दनाथाख्यश्रीश्रीनिवासाचार्य**शिष्येण **नित्यानन्दनाथाख्य-नारायणभट्टेन** विरचितायां **ताराकल्पलतायां** नित्यपूजाप्रयोगरूपः प्रथमः प्रतानः ।

Post-Colophonic : सं० १८८८ मार्गशीर्षशुक्ल ६ शनौ मगनीरामेणालेखि कृष्णगढमध्ये स्वाध्ययनाय ।

## 1648. दक्षिणाकालीपद्धतिः

OPENING : श्रीगुरुभ्यो नमः ।

वन्दे गुरुं ज्ञानमयंप्रकाशं मुक्तिप्रदानं भवभोगहेतुम् ।
चिच्छक्तियुक्तं वरदाभयाढ्यं भवं भवा(नी)सहितं नमामि ॥ १ ॥

**चित्प्रकाशं** गुरुं नत्वा पूर्णानन्दैकनि(वि)ग्रहम् ।
क्रियतेऽ**नन्तदेवेन** **दक्षिणाकालिपद्धतिः** ॥ २ ॥

CLOSING : ततः सर्वशेषं गृहीत्वा ओं ऐं उच्छिष्टचाण्डालिनी मातङ्गी सर्ववशंकरी स्वाहा । इत्यनेन शेषिकायै बलिं निवेदयेत् । ततः सर्वेषां भोजनताम्बूलदक्षिणादिभिः सन्तोष्य यथासुखं विहरेत् ।

COLOPHON : इति **दायदेवसम्प्रदायिना मातृपुर**स्थितेन **अनन्तदेवेन** विरचिते **दक्षिणाकाली-महापूजाविवरणं** नाम तृतीयोल्लासः ॥३॥

Post-Colophonic : संवत् १८७२ का भाद्रवामासे शुक्लपक्षे तिथौ ३ गुरौ मगनीरामेणालेखि मेड़तामध्ये । स्वाध्ययनाय ।

## 1772. बालात्रिपुरा-सामान्यपूजापद्धतिः

OPENING : श्रीगणेशाय नमः। श्रीबालात्रिपुरायै नमः। श्रीदत्तात्रेयसद्गुरुभ्यो नमः।

श्रीअमृतसद्गुरुभ्यो नमः।

विश्वेशं माधवं दंडिं दण्डपाणिं च भैरवम्।
वन्दे काशीं ग्रहं गङ्गां भवानीं मणिकर्णिकाम् ॥१॥

CLOSING : सर्वानन्दकरं सदाशिवपदं हृच्चैक्यमुक्तिप्रदं,
साम्राज्यं सुखदं मनोरथकरं अज्ञानविध्वंसनम्।
आयुः कान्तियशोविवर्द्धनकरं संसारमोहच्छदम्,
पात्रं यं नवनाथशक्तिनवमं प्रौढप्रतापोदितम् ॥६॥

COLOPHON: इति ऊर्द्ध्वाम्नायशिरोमणिसदापूर्णचन्द्रशिष्येण **माधवाचार्य**विरचितायां **श्रीबालात्रिपुरासामान्यपद्धतिपूजास्तुति** सम्पूर्णम्।

Post-Colophonic : संवत् १९१२ मिती श्रावणमासे कृष्णपक्षे तिथौ १० दशम्यां मंगलवासरान्वितायां लिखितं कवीश्वर-मगनीरामेण अजमेरमध्ये।

## 1775. बालार्चनचन्द्रिका

OPENING : श्रीगुरुगणपतिबटुकइष्टदेवतासारदे शाम्भवेभ्यो नमः।

अथ बालार्चनचन्द्रिकापद्धतिर्लिख्यते—तत्रादौ बालामन्त्रोद्धारः।

CLOSING : इति **सच्चिदानन्दनाथोक्तबालाचन्द्रिकायां** पञ्चमः प्रकाशः ॥५॥

& COLOPHON: आवाहनादिमुद्रालक्षणानि लिख्यंते। × × × × × × × इति **दक्षिणामूर्ति-संहितायां बालापद्धति** समाप्ताः।

## 1799. श्यामा-यन्त्रध्यानविवरणम्

OPENING : अथ यन्त्रविवरणं लिख्यते—बिन्दुत्रिकोणं पञ्चवर्तुलं अष्टदलभुपूर। बिन्दु ब्रह्म। त्रिकोणं सत्वरजतम वा ब्रह्माविष्णुस्वरूपं च। पञ्च–पृथ्वीअप्तेजवाय्वाकाश। अष्टदल–अष्टदिशा पूर्वादि। वर्तुल सर्वविश्वरूपाण्डरूपं। भुपूर पृथ्वीरूपं। स्थूलस्वरूपं स। एवं यन्त्रविवरणं इति।

CLOSING : श्यामा श्यामस्वरूपा वै भक्तानां हृदि संस्थिता।
करोमि सततं शीघ्रं भक्तानां जयसम्पदाम् ॥१०॥

एवं सूक्ष्मरूपं गायत्रीरूपं च ध्यात्वा स सर्वज्ञानी भवति।

COLOPHON : इति शाकद्वीपी-मगभोजक-द्विज**भास्करानन्दनाथ**कृतं यन्त्रध्यानविवरणं समाप्तम्

Post-Colophonic : लि. ज. सं. १८७२ प्रभवनाम्नि संवत्सरे पौषकृष्णा ३० बुधे हरिदुर्गे।

## 1811. अभयकुमारचरितम्

CPENING:

नमः सर्वज्ञाय । अर्हम् ।

आदौ धर्मोपदेष्टारं केवलालोकभास्करम् ।
सुरासुरनतं वन्दे श्रीनाभेयजिनेश्वरम् ॥ १ ॥

हरयोऽपि नमस्यन्ति येषां पादान् बतानिशम् ।
तेऽन्येप्यजितनाथाद्या जयन्ति जिनकुञ्जराः ॥ २ ॥

× × ×

**श्रीजिनेश्वरसूरीन्द्रो** जङ्गमः कल्पपादः ।
विबुधैः सेवितः सोऽयं पूरयत्वभिवाञ्छितम् ॥ १० ॥

अनेकाद्भुतशान्तादिरसनीरसरोवरम् ।
**श्रीअभयकुमारस्य चरितं** कीर्तयाम्यहम् ॥१५॥

CLOSING :
&
COLOPHON :

इति **श्रीजिनपतिसूरिपट्टलक्ष्मीभूषण-श्रीजिनेश्वरसूरिशिष्य श्रीचन्द्रतिलकोपाध्याय-**विरचिते **श्रीअयभमहर्षिचरिते अभयाङ्के** अभयकुमारदीक्षोत्सवनन्दीव्रतग्रहणमोक्षगमना-भयकुमारदेशनाकरणसर्वार्थसिद्धिगमनवर्णनो नाम द्वादशः सर्गः समाप्तः ॥ समाप्तंचेदं अभयकुमारमहर्षिचरित्रम् । ग्र. ७२५ अ. १३ ।

इत्थं मयाऽभयकुमारऋषेश्चरित्रं मिथ्यात्वपुष्टतरकमल··· चित्रम् ।
श्रोतृप्रमोदभरदायि सदा पवित्रं प्रोक्तं स्वशक्तिमनपेक्ष्य विचित्रचित्रम् ॥१॥

**श्रीजिनपालोध्यायकृतां** त्रिःप्रेरणामहम् ।
चरितकरणे प्रापं सरस्वत्युपदेशवत् ॥ ४१ ॥

सुशकुनमिवास्मि तन्मनो द्रढितामान्वितः ।
काव्याभ्यासविहीनोपि व्यधां काव्यमिदं ततः ॥ ४२ ॥

वाग्मी तर्कज्ञवैयाकरणगणमणिः पीतसिंधु···,
साहित्याध्वाध्वनीनो निरुपमकवितानर्तकी रङ्गभूमिः ।
व्याख्याताऽत्राश्रुतद्व्याश्रयविषममहाकाव्ययुग्मस्य नाना—
ग्रन्थस्रष्टा च **लक्ष्मीतिलक**गणिमुनिर्वाचनाचार्यवर्यः ॥४३॥

द्वयाश्रयटीकाकारी द्विव्याकरणः सुदृष्टसाहित्यः ।
सुक**विरभयतिलकगणि**श्चाशोधयतामिदं शास्त्रम् ॥ ४४ ॥ युग्मम् ।

परोपकृतिशीलनसुधिया धर्मबन्धुना ।
गणिनाऽ**शोकचन्द्रेण** लिखिता प्रथमा प्रतिः ॥ ४५ ॥

श्रीनाभेयजिनेन्द्रादितुङ्गप्रासादभूषिते ।
**श्रीवाग्भटमेरुपुरे** प्रारम्भि चरितं मया ॥ ४६ ॥

श्रीमद्**वासलदेवगुर्जरधराधीशे**ऽधिपे भूभुजा,
पृथ्वीं पालयति प्रतापतपने **श्रीस्तम्भतीर्थे** पुरे ।

चक्षुःशीतकरे त्रयोदशमिते (१३१२) संवत्सरे वैक्रमे
काव्यं भव्यतमं समर्थितमिदं दीपोत्सवे वासरे ।।४७।।

पृथ्वीप्रस्थानसंस्थः शिखरिमुखगिरिश्रेष्ठवक्रः प्रतीची,
प्रादीपाथोधिमग्नोर्द्धितकरतनिकार्केन्दुसन्नगरश्च ।

वज्रप्राकारसारोच्छ्रितफलककृतस्तुङ्गहेमक्षमाभृत्,
कूपस्तंतोद्युगङ्गाप्रवरसितपटोधिष्टितो देवताभिः ।। ४८ ।।

**श्रीजिनेश्वरसूरीणां** विनेयो लब्धिशालिनाम् ।
अस्यां प्रशस्तौ शस्तायां **श्रीकुमारगणिः** कविः ।। ४९ ।।*

Post-Colophonic : संवत् १९६३ ना माहावदि १३ ने वार बुधवार ।

## 1817. किरातार्जुनीयम् 'घण्टापथ' टीकासहितम्

OPENING : (On f. 8)

× × × × मेंति विभागं कृत्वा नयेन नीत्या वितन्यते विस्तार्यते ।। ९ ।।
सम्प्रति भृत्यादिषु अनुरागमाह—सखीति ।

CLOSING :

असंहार्येति । जयिनं जयशीलं उदयमस्त्रलाभरूपं अन्यत्रोदयमुदयाद्रिप्राप्य × × × × × × × × साधुमाहाभाग्योसीति तुष्टुवुः । शिखरणीवृत्तम् ।।४७।।

इ[ति] **महोपाध्याय-कोल[?ला]चल-मल्लिनाथसूरि**विरचितायां **किरातार्जुनीय-व्याख्यायांघण्टापथ**समाख्यायामष्टादशः सर्गः ।

Post-Colophonic :

संवत् सप्तदशासाढादि-एकोधिकत्रिंशत्तमेवर्षे दक्षिणायनगते द्युमणौ आषाढमासे वृषाकृतौ कृष्णपक्षे द्वितीयायां तिथौ गुरुवासरे श्रीमत्कणीवास्तव्यं जोशी० जीवाक्षस्य सुतेन प्रेमजिदाक्षेन पुस्तकमिदमलेखि ।

## 1823. कुमारपाल-चरितम्

OPENING :

चिदानन्दैककन्दाय नमस्तस्मै परात्मने ।
शिवश्री रमते यस्मिन् हंसीव सरसीरुहे ।। १ ।।

× × × ×

अमारिकारत्वेन तेषु स्तुद्वयोस्ति वस्तुतः ।
**कुमारपालक्ष्मापालो** धाम्ना धिष्ण्येषु चन्द्रवत् ।। ११ ।।

ततोऽस्य चरितं किञ्चिद् वच्म्यहं स्वपुपूषया ।
प्रेरितस्तद्गुणग्रामरामणीयकसम्पदा ।। १२ ।।

*This pras'asti in 48 verses was composed by Shri Kumāra-Gaṇi p/o Sri Jines'vara Sūri in the first half of the 14th c. It contains the genealogy, other religious works and descriptions of the piligrimages. performed by Khetū with many important historical evidences. The work has been published by Messrs. Hīrālāla Haṁsarāja of Jāmanagar.

CLOSING : & COLOPHON : इति **श्रीकृष्णर्षीय-श्रीजयसिंहसूरिविरचिते परमार्हतश्रीकुमारपालचरिते** महाकाव्ये श्रीकुमारपालस्वर्गगमनवर्णनो नाम दशमः सर्गः ।

इति ग्रन्थकृत्प्रशस्तिः ।*

Post-Colophonic : संवत् १४६२ वर्षे आसोशुदि १४ दिने वार गुरौ श्रीकुमारपालचरितं सम्पूर्णमिदं । ठा० महिराजेन लिखितम् ।

## 1825. कुमारसम्भवम्

OPENING : ओं नमो गणेशाय ।

अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः ।
पूर्वापरौ तोयनिधी वगाह्य स्थितः पृथिव्यामिव मानदण्डः ॥ १ ॥

COLOPHON : इति श्रीकुमारसम्भवे महाकाव्ये श्रीकालिदासकृतौ सुरतवर्णनो नाम अष्टमः सर्गः समाप्तः ॥ ८ ॥

Post-Colophonic : स्वस्ति संवत् १४३१ वर्षे द्वितीयश्रावणशुदि १४ शुक्रे अद्येह मूंधुरडीग्रामे राज श्री·········ल्लप्रतिवृत्तौ मेटपाटज्ञातीय पं० राउलसुत पं० राधवेण कुमारसम्भव काव्यपुस्तको लिखितम् ।

× × ×

आचार्यसदाफलसुत आ । दामोदरसुतस्य विभागो । देवजी···।

## 1833. कुमारसम्भव-टीका

OPENING : (On f. 2A) × × × × रेति । यत्र यस्मिन् हिमाद्रौ भूर्जत्वचे भूर्जवृक्षवल्कलानि विद्याधरसुन्दरीणां विद्याधराङ्गनानां अनङ्गलेखक्रियया × × × × × × हरितालादेरेव अत्र ग्रहणम् ॥ ७ ॥

CLOSING : & COLOPHON : इति **श्रीमालान्वयसाधुश्रीशालिगनन्दनसाधुश्रीअरडकमल्लसमभ्यर्थितखरतरगच्छीय-नरवेषसरस्वतिवाचनाचार्य-श्रीचारित्रवर्द्धन**विरचितायां **कुमारतात्पर्यदीपिकायां शिशुहितैषिण्यां** सप्तमः सर्गः ।

वंशे **श्रीजिनवल्लभस्य** सुगुरोः सिद्धान्तशास्त्रार्थविद्
दर्पिष्ठप्रतिवादिकुञ्जरघटाकण्ठीरवः सूरिराट् ।
नानानव्यसुभव्यकाव्यरचनाकाव्यो विभाव्यामल-
प्राज्ञो विज्ञनतो **जिनेश्वर** इति प्रौढप्रतापोऽभवत् ॥ १ ॥

× × ×

श्रीवीरशासनसरोरुहवासरेशः सद्धर्मकर्मकुमुदाकरपूर्णिमेन्दुः ।
वाचस्पतिप्रतिमधी**र्नरवेषवाणीश्चारित्रवर्द्ध**नमुनिर्विजयी जगत्याम् ॥१३॥

---

*There is a long Pras'asti of Jayasiṁha Sūri, the author, in the end. The work has been published.

श्रीमालवंशहंसो डोडागोत्रे पवित्रगुणपात्रम् ।
समजनि जगलूश्रेष्ठी विशिष्टकर्मा वरिष्ठयशाः ।। १४ ।।

× × ×

अरडकमल्लस्तुर्यो वर्यो धुर्यः सताममात्सर्यः ।
सत्कार्यो धर्मधनो मनोहरः सकलललनायाम् ।। २१ ।।

× × ×

एतेनाऽभ्यर्थितोऽत्यर्थं मुनिश्चारित्रवर्द्धनः ।
कुमारकाव्यविवृतिमकार्षं मन्दधीरपि ।। २४ ।।

गम्भीरार्थकुमारसम्भवमहाकाव्यस्य टीका मया,
वर्षे विक्रमभूपतेर्विरचितां दृग्नन्दमन्वङ्किते (१४६८) ।
माघे मासि सिताष्टमीसुरगुरावेषोञ्जलिर्वो बुधाः,
संशोध्या क्वचिदन्यथा यदि भवेद् युष्माभिरेव स्फुटम् ।।२५।।

श्रीमद्भिर्वाचनाचार्यैः कृता चारित्रवर्द्धनैः ।
ग्रन्थसंख्या····················द्विसहस्रिका ।। २६ ।।

चारित्रवर्द्धनाचार्यवर्यैर्विरचिता कुमारकाव्यटीका चिरं नन्दतात् ।

Post-Colophonic : संवति १८०५ वर्षे चैत्रशुदि १४ दिने लिखिता प्रतिरियमतिसत्वरतया ज्येठाभिधेन ।

## 1873. पद्मानन्दकाव्यम् (जिनेन्द्रचरितम्)

OPENING

मेरुस्नात्रभवैः सकुङ्कुमपयःपूरैः परीतोऽभवत्,
पीतस्तेन सुवर्णपर्वत इति ख्याति जगाम क्षितौ ।
देवीनृत्यविशीर्णहारमणिभिस्तारोमतस्तारका-
धारोऽसाविति यज्जनिव्यतिकरे सोऽव्याद्वृषाङ्कप्रभुः ।।१।।

CLOSING :

विश्वेशस्य मतिश्रुतावधिमयज्ञानत्रयस्याश्रयं,
प्रद्युम्नो नमनः प्रवेष्टुमशकस्त्रैलोक्यवीरोऽपि सन् ।
किंत्ववस्थान्नवयौवनेन जनिताऽवष्टम्भसंरंभत-
स्तद्रामाद्वयपाणिपीडनमहप्रस्तावभावाशया ।। १७२ ।।

COLOPHNO : इति श्रीजिनदत्तसूरिशिष्य-सरस्वतीकण्ठाभरणवेणीकृपाणापरनामपण्डितश्रीमदमरचन्द्रविरचिते श्रीपद्मानन्दापरनाम्निश्रीजिनेंद्रचरिताभिधाने महाकाव्ये वीराङ्के श्री आदिनाथचरिते प्रभुबाललीलायितवपुर्वर्णनो नाम अष्टमः सर्गः समाप्तः । ग्रन्थाग्र. श्लो० संख्या ७२१ ।

## 1875. पाण्डव-चरितम्

OPENING :

ॐ नमः वीतरागाय ।

श्रियं विश्वत्रयत्राणनिष्णः पुष्णातु वः प्रभुः ।
शङ्करः पुण्डरीकाक्षः श्रीमन्नाभिसमुद्भवः ।। १ ।।

× × ×

चरित्रं पाण्डुपुत्राणां पवित्रमभिदध्महे ।
श्रुतं हितोपदेशाय यज्जने पर्यवस्यति ॥ ५ ॥

CLOSING & COLOPHON :

इति **मलधारिश्रीदेवप्रभसूरिविरचिते पाण्डवचरिते** महाकाव्ये **बलदेवस्वर्गगमन-**श्रीमन्नेमिनाथ-पाण्डवनिर्वाणवर्णनो नाम अष्टादशः सर्गः ।

**श्रीकोटिकाख्यगणभूमिरहस्यशाख्या-**
या मध्यमेति विदिता विटपोपमेऽस्याः ।
**श्रीप्रश्नवाहनकुले** सुमनोभिरामः ।
ख्यातोऽस्ति गुच्छ इव **हर्षपुरीयगच्छः** ॥ १ ॥

तत्राऽजनि श्रुतसुधांबुधिरिन्दुरोचि-
स्वर्द्धिष्णुकीर्त्तिविभवोऽ**भयदेवसूरिः** ।
शान्तात्मनोप्यहह निस्पृहचेतसोऽपि,
यस्य क्रियाऽखिलजगज्जयिनी बभूव ॥ २ ॥

× × ×

तेषां कल्पतरुत्रिविष्टपगवाचिन्तास्मवैहासिका-
दादेशा क्वचि मार्गवलगनकलानैपुण्यंश्चान्यैरपि ।
**श्रीदेवप्रभसूरिभिर्सूनुभुवां पाण्डोश्चरित्रं** किम-
प्येतत्तद्विबुधादिशिष्यहृदयोल्लासार्थमग्रथ्यत ॥ ६ ॥

**श्रीयशोभद्रसूरीणां** तथावव्यापृतादृशः ।
यथैतदगमत् सर्वविद्वल्लोकावलोक्यताम् ॥ १० ॥
ज्ञानैक···य मूर्तीनामस्मिन्न च रसान्विते ।
**श्रीनरचन्द्रसूरीणां** प्रज्ञया केन कायितम् ॥ ११ ॥
प्रीत्यावलोकनेनैव कर्णक्रोडनवातिथे ।
कर्त्तुमातिथ्यमर्हन्ति ग्रन्थस्यास्य मनीषिणः ॥ १२ ॥

## 1878. पाण्डव-चरित्र-संक्षेपः

(पाण्डवचरित्रोद्धारः)

OPENING

ओं नमः ।

श्रीदेवला श्रीयुगादिनाथाय । पाण्डवानां चरित्रं **गद्यबन्धेन** लिख्यते—अस्मिन् भरतक्षेत्रेऽस्यामवसर्पिण्यां पूर्वं श्रीआदिदेवोऽभूत् ।

CLOSING & COLOPHON :

पाण्डवचरित्रात् संक्षेपपाण्डवचरित्रोद्धारो लिखितः ।

अर्हन्तो विशदद्युतिः किशलयच्छायाश्च सिद्धासि मे,
आचार्यास्तपनीयवर्णरुचयः प्रियङ्गुप्रभा वाचकाः ।
वैडूर्याञ्जनकान्तकान्तकलिता वाचंयमाः सद्यमाः,
पञ्चैते परमेष्ठिनः प्रददतां स्वान्तेष्टसिद्धिं सताम् ॥१॥

× × ×

तेषां पुण्यपवित्रितात्मजनुषां शिष्टैकरेखाजुखां (षां),
श्रीमत्पाण्डुनरेशितुस्तनुभुवां प्रागूसूरिसंसूत्रितान् ।
श्रीवृत्तादवगाह्य वा··· रुचितं संक्षेपरुच्यात्म···,
सम्बन्धं सु···धये कमपि···वक्षे समासादहम् ॥ ३ ॥

Post.-Colophon :

इति भद्रम् । गणि···रींडा शिशु रत्नहर्षेण लिखितम् ।

## 1879. प्रद्युम्न-चरितम्

OPENING :

श्रीपार्श्वमानम्य ।

श्रीमन्तं सन्मतिं नेमिनाथं जिनेश्वरम् ।
विश्वजेताऽपि मदनो बोधितुं नो शशाङ्कयम् ॥ १ ॥

× × × ×

यदुक्तं सूत्रे विद्वद्भिर्महसेनादिसूरिभिः ।
तत्कथं शक्यते नूनं मया बालेन भाषितम् ॥ ४ ॥

तथापि तत्क्रमाम्भोजप्रणामार्जितपुण्यतः ।
**श्रीप्रद्युम्नाभिधं** ग्रन्थं प्रवक्तुं मे श्रमो नहि ॥ ५ ॥

CLOSING :

**नन्दीतटाख्ये** विमले सुगच्छे **श्रीरामसेनो** गुणवारिराशिः ।
बभूव तस्यान्वयशोभकारी **श्रीरत्नकीर्तिर्दु**रितापहारी ॥६६॥

× × ×

श्री**भीमसेनस्य** पदप्रसादात् **सोमा**दिसत्**कीर्त्ति**युतेन भूमौ ।
रम्यं चरित्रं विततं स्वभवत्या संशोध्य **भव्यैः पठनीयमेतत्** ॥ ६८ ॥

संवत्सरे सत्तिथिसंज्ञके वै वर्षेऽत्र त्रिंशैकयुते पवित्रे ।
विनिर्मितं पौषशुदेश्च तस्या त्रयोदशी या बुधवारयुक्ता ॥ ६९ ॥

× × ×

चतुःसहस्रसंख्यातः सार्द्धं चाष्टशतैर्युतः ।
भूतले सततं जीयाच्छ्रीसर्वज्ञप्रसादतः ॥ ७२ ॥

COLOPHON :

इति **श्रीप्रद्युम्नचरिते श्रीसोमकीर्त्याचार्य**विरचिते श्रीप्रद्युम्नशांम्ब-अनिरुद्धादि-निर्वाणगमनो नाम षोडशः सर्गः ॥ १६ ॥ पूर्णम् ।

Post.-Colophon :

श्रीपूज्यहरजीवपदप्रसादात् प्राप्तं चरित्रं निजधर्मलीलाम् ।
भव्योपकारी कुशलीयपुस्तकः स्वात्मार्थसूर्त्तर्षि लिपीकृतेन ॥ १ ॥

संवत्सरे दशसप्तसहस्रकेचि वर्षे नवत्येकविराजितोचि ।
पूर्णं कृतं षाढशुदेश्च तस्यां प्रतिपत्तिथौ या गुरुवार युक्तौ ॥ २ ॥

उदयास्तपपर्यन्तं दक्षणेप्युत्तरेषु च ।
सर्वे दिशश्च मध्योऽयं **नगरसहंदि** उच्यते ॥ ३ ॥

तत्रैव प्रीतिमुत्पन्नं शास्त्रे ज्ञेयं तु मुत्तमम् ।
हंसस्तु साकं क्रिडेयं लिखमि पुस्तकं मिदम् ॥ ४ ॥

## 1881. प्रद्युम्नचरित-काव्यम्

OPENING :

प्रणतमानवदानवनायकः प्रथमतीर्थपतिः शिवदायकः ।
विजितदुस्सहमन्मथसायकः प्रकुरुतां मतिमस्तकषायकः ।। १ ।

CLOSING :

वराष्टमाङ्गं चरितं च नेमेर्माहात्म्यमुद्यद्विमलाचलस्य ।
**दिगम्बराणां चरितं** विलोक्य **प्रद्युम्नसंज्ञं** विदधे **चरित्रम्** ।। १४ ।।

पठिष्यति श्रोष्यति वाचयिष्यत् पदश्चरित्रं शुभभावतो यः ।
तस्यैहिकामुष्मिकमङ्गलानि प्रादुर्भविष्यन्त्यतुलानि नित्यम् ।। २५ ।।

COLOPHON :

इति पण्डितचक्रचक्रवर्त्ति-पण्डितश्रीराजसागरगणिशिष्य—पं० श्री**रविसागरगणि** विरचिते श्रीप्रद्युम्नचरित्रे श्रीप्रद्युम्नशाम्बतपःकरणकेवलज्ञानोत्पत्तिनिर्वाण[ग]मनो नाम षोडशः सर्गः ।। १६ ।।

तस्मिन् **माण्डलिनाम्नि** चारुनगरे **खंगारराजो**त्तमे,
सम्पूर्णं समजायताग्रचरितं **प्रद्युम्न**नामा घनम् ।
संख्यातश्च सहस्रसप्त[क]मिदं द्वाभ्यां शताभ्यां शुभं,
पञ्चाम्भोनिधिषण्णिशापतिमिते वर्षे चिरं नन्दतात् ।।१।।

इति प्रद्युम्नचरित्रं सम्पूर्णम् ।

ग्रन्थाग्रं सर्वसंख्या ७००० । २०० [७२००]

Post-Colophonic

उत्सवक्यालेखि सम्पूर्णं जातं अहमदाबादनगरे

## 1883. भक्तिचन्द्रः 'किरणमाला' टीकासहितः

OPENING :

श्रीगणाधिपतये नमः । श्रीर्जयति ।

सर्वान् गीर्वाणसङ्घानिह परिघटयन् पर्वणा पूर्वकान्तीन् ,
वर्णावर्णाभ्युदीर्णद्युतिरमृतमयोपर्णया वर्ण्यमानः ।
व्यासः व्यासक्तचित्तार्पितनवविभवः प्राचिरात् प्राचितार्थः ,
शम्भुः शम्भुव्युदग्रं कलयतु भगवान् भावभृद्भावकानाम् ।। १ ।।

गणपतिमतिसुन्दराङ्गमीशं भजदभयप्रदमम्बिकात्मजं तम् ।
निखिलसुरनिकायवन्द्यमानं जगदुदयस्थितिभङ्गहेतुमीडे ।। २ ।।

**टीका किरणमालाख्या भक्तिचन्द्रे** विरच्यते ।
पाठादेव भवेद् यस्यास्तस्यार्थप्रत्ययः स्फुटः ।। ३ ।।

अथ निखिलकविमण्डलाखण्डलः श्री**हरिहरदेवशर्मा**भिधानः कवि**र्हरिहरभक्तिचन्द्र**नामाऽयं **षोडशकलं** काव्यं निर्मिमाणस्तदादौ गौरीहरात्मकमेकं तत्त्वं वर्णयन् मङ्गलमाचरति-संसारमूलमिति ।

संसारमूलं परमार्थकारणं सुवर्णकर्पूरसमानमव्ययम् ।
आनन्दकन्दं सदनादिचिन्मयं स्त्रीपूरुषाकारमहं भजे महः ।। १ ।।

[पञ्चदशीकलायाम्]

CLOSING :

राधिके तव गतिं भुवि हंसी शिक्षितुं प्रयतते सितपक्षा ।
कोकिलः किल पठन्नपि वाचं, मेचको मुखसुधांशुविरोधी ॥ १५ ॥

राधिके इति । हे राधिके ! हंसी-मराली भुवि तव गतिं शिक्षितुं प्रयतते । × × × × × × वदनचन्द्रस्तमपराधिनं मेने, तेनाऽसौ पापवान् श्याम इति भावः ॥ १५ ॥

## 1884. युधिष्ठिरविजयमहाकाव्यं सटीकम्

OPENING :

श्रीवीतद्विषे नमः ।

[पञ्चम आश्वासः]

अभयवरो धीप्रकारो यो देवो हृतसमस्तपातकप्रकरः ।
वामे भागे सशिवः पायान्नः सर्वदा स शिवः ॥ १ ॥

अथार्जुनस्य त्रिदिवयानानन्तरं युधिष्ठिरादीनामुदन्तं वर्णयन्नाह —

अथ नरदेवनिदेशात् पार्थे संप्राप्तसुरपदेऽवनिदेशात् ।
तापसवंशमवन्तस्तन्वानाः शत्रुपरिभवं शमवन्तः ॥ १ ॥

CLOSING & COLOPHON :

इति श्री**महाकविवासुदेव**विरचिते **युधिष्ठिरविजये महाकाव्ये कश्मीर**देशवास्तव्य-महामाहेश्वर-विपश्चिद्वर-**राजाजनकश्रीशङ्करकण्ठात्मज राजान**[क]**रत्नकण्ठ**विरचितायां **शिष्यहिताभिधानायां टीकायां** भीष्मसेनापतित्व-अर्जुनसेनापतित्वाभिषेकधृतराष्ट्रसुत-युद्युत्सुसत्कपाण्डवाश्रयणायोत्स्यमानाग्रस्थितबन्धुदर्शने[ नो ]त्पन्नार्जुनौदासीन्यश्रीकृष्ण-तत्प्रतिबोधनलोका''''तबधरूप-भीष्ममहासङ्ग्रामवर्णन-युधिष्ठिरादियाचितस्वमरणो-पायवर्णन-भीष्मवधार्जुनकृततद्योगोपधानतच्छरशय्यानिवेशार्जुनशरोत्पाटितभूगर्त्तजलो-त्पत्तिवर्णन - द्रोणाचार्यसेनापतित्वाभिषेक - द्रोणाचार्यवाक्य - दुर्योधनयाचितयुधिष्ठिर-बन्धनार्जुनविनाकृतयुधिष्ठिरबन्धनरूपद्रोणप्रतिज्ञावर्णनापनयनार्थ-त्रैगर्ताज्ञाततदपनयन-भीमसेनसङ्ग्रामवर्णन-भगदत्तयुद्धार्जुनकृतभगदत्तवधास्तवर्णन - द्रोणाचार्यकृतचक्रव्यूह-जयद्रथकृतयुधिष्ठिरादिपाण्डवचतुष्टयरोध - द्रोणकर्णादिछलकृताभिमन्युवधार्जुनागमन-तद्विलापार्जुनकृतजयद्रथवधप्रतिज्ञा - द्रोणकृततद्रक्षाप्रतिज्ञा - भूरिश्रवोवधार्जुनकृत-जयद्रथवधरात्रियुद्ध-कर्णकृतघटोत्कचवध-धृतद्युम्नकृतद्रोणवध-सूर्यास्तमयवर्णनं **सप्तम आश्वासः** ।७।

श्रीपरमात्मने नमः ।

कैलासं योगं गां रक्षन् यति धारयति त्रयो गङ्गाम् ।
जन्मिभवोल्लासहरः याया विश्वस्तुतः स हरः ॥ १ ॥

## 1895. रघुवंशमहाकाव्यं सलघुटीकम्

OPENING :

वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये ।
[ज]गतः पितरौ वन्दे पार्वतीपरमेश्वरौ ॥ १ ॥

अहं पार्वतीपरमेश्वरौ वन्दे । उमामहेश्वरौ नमस्करोमि । पार्वती च परमे[श्वर] श्च पार्वतीपरमेश्वरौ । किमर्थं वागर्थप्रतिपत्तये । × × × × × × × × पार्वती-पिपर्त्ति पालयति पार्वतोपरो महेश्वर मा लक्ष्मीस्तस्या ईश्वरो मेश्वरः, पार्वती परमेश्वरश्च पार्वतीपरमेश्वरौ ।। १ ।।

(On f. 24) तत्र श्रीकालिदासकृतौ **रघुमहाकाव्ये जनार्दनकृतौ टीकायां** तृतीय : सर्गः ।

× × ×

CLOSING : & COLOPHON : तं भूत्यर्थम् । ततोऽनन्तरं राज्यं राज्ञा विदधतः । कारयामास । कैः सार्द्धं मौलैं मन्त्रैश्वरैः स्थविरसचिवैः सार्द्धम् । कि. ष्टा सा राज्ञी हेमसिंहासनस्था । राज्ञी किं कुर्वाणा तै गर्भं गूढान्तर्गूढं दधानाः । किमद्यं(र्थं) प्रजानां लोकानां भूत्यर्थं । × × × × × × राज्ञा भर्त्तु आज्ञा गर्वी इव ।।५८।।

इति कृता कालिदासरघुवंशे० राज्यप्रतिष्ठासन्धानो नामैकोनविंशतिमः सर्गः ।।५६।।

## 1901. रघुवंश-टीका

OPENING : [ विशेषार्थबोधिका ]

ध्यात्वा तां ब्रह्मपुत्रीमधिकमधगमं तन्वती दत्तपद्मां ,
सेवासंप्राप्तदेवासुरविसरशिरोमौलिघृष्टांह्रिपद्माम् ।
यस्या सन्मुग्धदुग्धोज्ज्वलममलयशः श्रोतुमष्टश्रवांसी ,
वाजो दध्रेऽष्टकाष्ठावधिषु सरभसं गीतमाशाङ्गनाभिः ।। १ ।।

**दिनकर-वल्लभ-चारित्रवर्द्धनाग्रिम-जनार्दनाभिमुख्यैः** ।
कविभिर्विहिताः स्वहितास्तद्वृत्तीः प्रथममुपजीव्य ।। ५ ।।

कुर्वे **श्रीरघुवृत्तिं** नव्यां भव्यार्थदीपनपटिष्ठाम् ।
प्राप्य श्रीगुरुचरणादेशं शिष्यप्रबोधकृतेः ।। ६ ।।

यद्यप्यवद्यरहिताः पूर्वेषां वृत्तयो विशेषयुताः ।
तदपि तदेकीकरणादत्रायासोऽस्तु मे सफलः ।। ७ ।।

वागर्थेति—

CLOSING : & COLOPHON : इति श्रीमत्**बृहत्खरतरगच्छीयवाचनाचार्यप्रमोदमाणिक्यगणिशिष्यसंख्यावन्मुख्य श्रीजयसोमगणि**तच्छिष्य**श्रीगुणविनयगणि**कृतायां **विशेषार्थबोधिका**ख्यायां **श्रीरघुवंशवृत्ता**-वेकोनविंशः सर्गः ।

श्रीमत्**खरतरगच्छे** पुरा पराः सूरयः पराक्षोभ्याः
**श्रीमदभयदेवार्या** वर्यगुणावात(वदात) सौन्दर्याः ।। १ ।।

× × ×

तेषां वाचकमुख्या **गुणरंगाख्या** अमी विशदपक्षाः ।
सदयारङ्ग[ः] शिष्या **जयसोमाह्वा**स्तथा भान्ति ।।२।।

तेषां शिष्येणेयं विपुला वृत्ति र्विशिष्यशिष्याणाम्।
पठनायाऽशठमनसां रुचिरा **गुणविनयगणि**सुधिया ॥ ६ ॥

× × ×

श्री**सूर्यवंशीय**नृपावतंसात् प्रशंसितोऽभूद् भवतः सुवंशः।
श्री**रामचन्द्रा**दिनृपा जितेन्द्रिया यत्राऽभवंस्तत्र किमद्भुतं वः ॥१५॥

× × ×

भूचक्रचक्रवर्तिन्युदारतत्त्वाधिकारनिष्णाते।
विजयिनि श्री**मदकब्बर**भूशक्रे मान्यविबुधजने ॥ १८ ॥

श्रीसाहिलब्धमानश्री**मज्जिनचन्द्रसू**रिराजाज्ञाम्।
विन्यस्य शिरसि सरसाशेषामिव सद्विशेषयुता ॥ १९ ॥

**विक्रमतो** रसहरिभुजरसशशीवर्षे जनोत्सवोत्कर्षे।
श्रीम**द्विक्रमनगरे** विहितेयं विमलमतिगम्या । २० ॥ (युग्मम्)

श्रीपार्श्वनाथस्य परप्रसादात् संकल्पिताभीष्टविधायिनाम्नः।
निर्विघ्नमेषा लघुसिद्धिमाप श्री**राघवीवृत्ति**रनिन्द्यवृत्ता ॥ २१ ॥

श्रीजिनदत्तगुरूणां श्रीमज्जिनकुशलसूरिराजानाम्।
सौम्यदृशा शुभदा स्तात् विद्वद्भिर्वाच्यमानेयम् ॥ २२ ॥

इति श्रीराघवीवृत्तिः समाप्ता। ग्रन्थाग्रं० ६०००

## 1905. रघुवंशादिकाव्यदुर्घटसाधनम्

OPENING :

भगवत्यै नमः।

क्रीडानिर्मितवामन्यद्भुततनुच्छद्मोदयालम्बिने,
············रसातले दितिसुतो द्वेषाद् बलिलीलया।
येन क्रोडकलेवरेण वसुधामनाधृताम्भोनिधि-
तस्मै कंसमधे निकृत्तामधुके नित्यं नमो विष्णवे ॥ १ ॥

ज्ञात्वा **पाणिनिशास्त्र**मद्भुततमं दृष्ट्वाथ वां मतां,
काला पञ्चसमस्तकाव्यनिचयं **धातोश्च पारायणम्**।
धातोर्वृत्तिमनुत्तमां तदपरं नाम्नां च पारायणं,
**वैद्यो दुर्घटसाधनं** वितनुते श्री**राजकुण्डः** कविः ॥ २ ॥

रघ्वादिषु प्रबन्धेषु कारके सुप्तिजास्तथा।
कृत्तद्धितसमासेषु प्रोच्यते दुर्घटोच्चयः ॥ ३ ॥

समासे तद्धिते कृते प्रोच्यते कृतिदुर्घटम्।
तत्र रघुकाव्ये—

CLOSING : & COLOPHON ;

[f. 15] इति श्री**राजकुण्डविरचिते दुर्घटसंग्रहे रघुकाव्ये** दुर्घटानि समाप्तानि। अथ **कुमारसम्भवे** दुर्घटानि।

× × ×

[f. 23] इति **वैद्यराजकुण्ड**विरचिते **दुर्घटसंग्रहे कुमारसम्भव**दुर्घटानि समाप्तानि ।

अथ **मेघदूतकाव्ये** ।

× × ×

[f. 26] इति **श्रीराजकुण्ड**विरचित**मेघदूतदुर्घटानि** समाप्तानि ।

× × ×

[f. 30] इति सद[द्]**वैद्यराजकुण्ड**विरचित**दुर्घटसङ्ग्रहे माघकाव्ये** दुर्घटानि ।
अथ **किरातकाव्ये**–

[f 33] इति **किरातकाव्ये** दुर्घटानि समाप्तानि । × × ×

ग्रन्थाग्र. सहस्र १०१६ ।

## 1906. वासुपूज्यचरितम्

( आह्लादनाङ्कमहाकाव्यम् )

OPENING :

श्रों नमः श्रीसर्वज्ञाय ।

अर्हन्तं नौमि नाभेयं कल्याणकलशं सताम् ।
रेजुराम्रदलानीव यत्कर्णनिकटे जटाः ।। १ ।।

वासवानां हि यः पूज्यो वासुपूज्य इति श्रुतः ।
तस्य तीर्थेशितुः चारुचरितं रचयाम्यदः ।। १३ ।।

CLOSING : & COLOPHON:

इति **दण्डाधिपतिश्रीमदाह्लाद**नसमभ्यर्थित-श्री**विजयसिंहसूरि**शिष्यश्री**वर्द्धमान-सूरि**विरचिते श्री**वासुपूज्यचरिते आह्लादनाङ्के महाकाव्ये** महोदयलब्धिवर्णनो नाम चतुर्थः सर्गः । ग्र. १३६९ उभयं ५४५१ ।.

सम्पूर्णमिद भूर्भुवः स्वस्त्रयीपूज्यस्य श्रीवासुपूज्यचरितम् ।
श्री**नागेंद्रमुनीन्द्रगच्छ**तिलकः श्री**वीरसूरि**र्बभौ ,
यस्माद्बोधमवाप्य **मण्डलपति**र्जज्ञे यति**श्चिच्चिग**: ।
तच्छिष्यः **परमारवंश**विशदः **श्रीवर्द्धमान**प्रभु-
स्तत्पट्टोदयपर्वतैकतरणिः **श्रीरामसूरि**स्ततः ।। १ ।।

× × ×

**सूरेर्विजयसिंहस्य** शिष्यो गुर्वाज्ञया ततः ।
सूरिः **श्रीवर्द्धमानो**ऽस्मिन् गच्छे यामिकतां दधौ । ७ ।।

× × ×

सकलाक्षरगणनायां जयति श्रीवासुपूज्यचरितमिदम् ।
वेदनिधिवेदवाणानीताङ्कग्रन्थसम्पूर्णम् ।। ३१ ।।
अङ्कतोऽपि सर्वसंख्या ५४९४ ।

Post-Colophonic : संवत् १५२० वर्षे वैशाखवदि ५ गुरुदिने श्रीमदणहिल्लपुरे प्राग्वाटज्ञातीय श्रेष्ठि धांधा भा० कपूरी सुता भली पुण्यार्थं श्रीवासुपूज्यचरितं लिखाप्य श्रीपूर्णिमापक्षे भ० श्रीजयसिंहसूरिपट्टे भ० । श्रीजयप्रभसूरीणां प्रदत्तं वाच्यमानं चिरं नन्द्यात् ।

शाश्वद्भूरियशाः शशाङ्कवदनः कन्दर्पदर्पापहः ,
श्रीजैनागमपारगः शुचिमतिर्वादीन्द्रचूडामणिः ।
विश्वानन्दकरस्तमश्रुतिहरः कारुण्यपाथोनिधिः ,
सूरीन्द्रः स जयप्रभो विजयतां स्फूर्जत्प्रभावश्चिरम् ॥१॥

किं वक्त्रेन्दुसमुद्भवद्युतिभरः किं हृद्यविद्यावधू-
लीलानिर्मितसुस्मितं किमु सुमस्तोमः क्षमाभूरुहः ।
इत्थं यस्य वितर्क्यते सुकविभिर्व्याख्यानवाग्वैभवः ,
शुभ्रोऽस्तीव जयप्रभुः स जयतां सूरीश्वरः सर्वदा ॥ २ ॥

## 1907. विष्णुभक्तिकल्पलताविवरणम्

OPENING श्रीगणेशाय नमः । श्रीनृसिंहाय नमः ।

नृहरिं गिरिजां गिरं गणेशं गुरुपादाब्जयुगं शिवं प्रणम्य ।
**हरिभक्तिलता**मिधेऽत्र काव्ये **विवृतिं** वच्मि यथामतीशतुष्टचै ॥१॥

तत्र स्वाभीष्टदेवतावर्णनरूपं **विष्णुभक्तिकल्पलताख्यं** काव्यं चिकीर्षुः प्रारिप्सित-ग्रन्थनिर्विघ्नसमाप्त्यै शिष्टाचारपरिपालनाय च **पुरुषोत्तमकविराड्** विघ्नेशस्मरण-लक्षणमाशीरूपं काव्यमुखं वदति ।

CLOSING : इदानीं ग्रन्थान्ते मातृपितृनामकथनपूर्वकं स्वनाम निगमयति—

मानीति । यस्य **माता मानी पिता विष्णुनामा** । यस्याख्या नाम **पुरुषोत्तमः** स इमां **विष्णुभक्तिकल्पलतां** चक्रे कृतवान् । कीदृशः सतां साधूनां चक्रे समूहे कृतोऽञ्जलिर्येन सः । समाप्तेयं विवृतिः ॥ ४१ ॥

श्रुतिबाणरसेन्दुमानवर्षे नभसि स्कन्ददिने सितेऽर्कवारे ।
**महिदासबुधो गिरीशपुर्यां** कृतवान् **कल्पलताप्रकाश**मेतम् ॥१॥

COLOPHON : इति श्री**विष्णुभक्तिकल्पलताविवरणे** श्री**महीधरकृते** चित्तप्रबोधो नामाष्टमः स्तबकः ॥ ८ ॥

Post-Colophonic : संवत् १७९९ वर्षे शाके १६६४ प्रवर्त्तमाने रविदक्षिणायनगते श्रीसूर्ये हेमन्त-ऋतौ महामाङ्गल्यफलप्रदपौषमासे शुक्लपक्षे २ द्वितीया श्रीशनिवासरे अद्येह श्रीनवीने पुरे अहिछत्रनागरज्ञातीय मेता कुअरजीसुत प्रभुजितालेखि । श्री श्रीमालज्ञातीय ओझा श्री ५ रघुरामसुत ओझा श्री ५ देवराम चिरंजीवपठनार्थं वा परोपकाराय ।

## 1917. शिशुपालवध-टीका

(सन्देहविषौषधिसारटीका)

OPENING : ओं नमः श्रीविघ्नवल्लीकुठाराय । ओं नमः श्रीसर्वज्ञाय ।

यस्य भृङ्गावलिः कण्ठो (ण्ठे) दानाम्भोराजिर जते ।
भाति रुद्राक्षमालेव स वः पायाद् गणाधिपः ॥ १ ॥

अभीष्टफलसम्पत्तीहेतुं स्मृत्वा सरस्वतीम् ।
**शिशुपालवधे** काव्ये **सारटीका** विधीयते ॥ २ ॥

CLOSING :

**सूनोरानन्ददेवस्य** दयाभूम्यो ········स्यवः ।
व्यधत्त टीकां काव्येऽस्मिन् **वल्लभः** सूरिवल्लभाम् ॥ १ ॥

विवरणमन्यं दृष्ट्वा बुधैस्ततो ज्ञास्यते विशेषोऽयम् ।
यत्र येन...वतं तद्वश्रायास्त कुतो विषावज्ञः ॥ २ ॥

श्लोकानां च समानेया सहस्राणां दशैव हि ।
मूलग्रन्थस्य संयुक्ता सहस्रे···न द्वादश ॥ ३ ॥

ग्रन्थाग्रन्थ संख्या १२००० श्रीरस्तु ।

COLOPHON : समाप्तेयं **वल्लभानाम्नी टीका श्रीमाघमहाकाव्यस्य** ।

Post-Colophonic : शुभसंवत्सरे संवत् १८३८ रा वर्षे शाके १७०३ प्रवर्त्तमाने मासोत्तममासे मार्गशीर्षमासे शुक्लपक्षे षष्ठीतिथावित्ति श्रेयःश्रेणयः श्रीबान्ताग्रामे माहाराजाजी श्रीविजयसिंघजीराज्ये । सकल············पण्डितचक्रचूडामणिपण्डित श्री श्री १०८ श्रीविनीतसागरजिद्गणिस्तदनुक्रमेण पण्डितोत्तमपण्डितचक्रचूडामणि पं० श्री १०८ श्रीधीरसागरजिद्गणिस्तच्छिष्य पं० अमृतसागरस्सविनयेन सोल्लासेन लिखिता प्रतिरियं । शिष्यतीर्थसागरवाचनायेदं पुस्तकमिति श्रेयःश्रेणयः ।

## 1918 शिशुपालवध-'सर्वानुवादिनी' टीका

OPENING :

ओं नमः परमात्मने ।

कलयामि यदोः कुलस्य भूषां निगमान्तैकनिवेद्यमानमर्थम् ।
बहुना नरभावमाश्रयन्तं नवनीत मणिकान्ततो हि [?]लीहन्तम् ॥१

प्रबन्धसिन्धूत्तरणैकहेतोः प्रयस्यतो मे नवलं बभस्य ।
नीरुर्गनिर्विघ्ननबद्धसिद्धं विधेहि लम्बोदरत्वम् ॥ २ ॥

अधिगुणसदुक्तिमुक्तां गुणगणसुभगस्य **माघकाव्यस्य** ।
बालावबोधविधये तनवै **सर्वानुवादिनीटीकाम्** ॥ ३ ॥

विदुषां सरणौ समाविविक्षौ स्खलितो मेऽल्पधियो न जातु भीतिः ।
करुणावरुणालया हि संतो विगुणानां सगुणीकृतौ कृतार्था ॥ ४

CLOSING & COLOPHON : इति **श्रीधर्माङ्गदसूनोः कमलानन्दनस्य दिनकरमिश्रस्य** कृतौ **माघटीकायां** दशमः सर्गः ॥ १० ॥

श्रुतिसमधिकमिति । श्रुत्या ध्वनिभेदेन समधिकं ऋषभापेक्षया ××××× कपिलेन सार्द्धं भिन्नकीकृत्येति अनत्यंतगतौ क्तादिति कन् । तदन्ताञ्चिररति ×××

## 1936. घटखर्परकाव्यं सटीकम्

OPENING :

श्रीगणेशाय नमः ।

निचितं खमुपेत्य नीरदैः प्रियहीना हृदयावनीरदैः ।
सलिलैर्निहितं रजः क्षितौ रविचन्द्रावपि नोपलक्षितौ ।। १ ।।

हे सखि ! नीरदैः मेघैरागत्य खमाकाशं निचितं व्याप्तमित्यर्थः । किंविशिष्टैर्नीरदैः । ५ × × × × × × × × रेणुर्द्वयोस्त्रिया धूलीः पांशुर्ना नद्वयो रज- इत्यमरः ।। १ ।।

CLOSING :

भावानुरक्तवनितासुरतैः सपेयं आलम्ब्य चाम्बुतृषितः करकोशपेयम् ।
जीयेय येन कविना यमकैः परेण तस्मै वहेयमुदकं घटखर्परेण ।। २२ ।।

अहं शयेयं श्यथंकरो करोमि कैः भावानुरक्तवनितामपि न व्रजामि । तृषितोऽपि सन् करकोशपेयमम्बु चालभ्य शयेयं । तस्मै कस्मैः कविति अहमत यमकैर्जीयेय २२

COLOPHON: इति श्रीटीकायां घटखर्परार्थकायां सांगोपाङ्गा समाप्ता ।

Post-Colophonic : संवत् १८७५ लिखितं पूज्य वीहारीर्षि ।

## 1937 घटखर्परकाव्यं सटीकम्

OPENING

लङ्कारममृतं ब्रह्मशिवमक्षरमव्ययम् ।
यमामनन्ति वेदेषु तं प्रपद्ये गणाधिपम् ।। १ ।।

निचितमिति । निचितं निरुद्धं तिरोहितं । किं ? खं-आकाशं । कै ? नीरदैः मेघैः । किं कृत्वा ? उपेत्य आगत्य । × × × × ईदृशः समयमस्ति ।। १ ।।

CLOSING :

आलम्ब्येति । काव्यकर्त्तुः प्रतिज्ञैवं । कीदृशी ? सा मया घटकर्परेण वहेयं । × × × × × कैः ? भावानुरक्तवनितासुरतैः भावेन अनुरक्ताचासौ वनिता च सुरवनिताविलासविभ्रमानि तैः ।

COLOPHON : इति घटकर्परटीका समाप्ता ।

## 1938. घटखर्परकाव्यं सटीकम्

OPENING :

श्रीगणेशाय नमः ।

क्रियते घटखर्परस्य टीका विदुषा शङ्करभक्तशङ्करेण ।
शिवमङ्गलमूर्तिरामलक्ष्मीः सततं सूर्यमजं गुरुं च नत्वा ।। १ ।।

अत्र वस्तुनिर्देशात्मकं मङ्गलमस्ति । अथ पञ्चभिः श्लोकैः कुलकमाह—तल्लक्षणम् । × × × × सूत्रमाह-निचितम् ।

CLOSING :

अथ कवि : कर्त्ता एतादृशं ग्रन्थं कृत्वा स्वयमकैः प्रणम्य प्रतिज्ञां दर्शयितुमाह— × × × × × आलम्ब्य करे धृत्वा । किंभूतोऽहं तृषितः पिपासुः । वसन्ततिलकाच्छन्दः ।। २३ ।।

COLOPHON : इति श्रीशङ्करसूरिकृतं घटखर्परटिप्पनं सम्पूर्णमस्ति ।

## 1939. घटखर्परकाव्यं सटीकम्

OPENING : सरस्वत्यै नमः ।

कुकाव्यराक्षसस्येदं काव्यं भावनिरन्तरम् ।
क्रमाद्विधममीषां स्युः स्पष्टार्थस्यापि बोधका ॥ १ ॥

तथापि चित्तचापल्यात् तस्य टीका विधीयते ।
क्षन्तव्यमिति विद्वद्भिः व्याख्यानं साध्वसाधु वा ॥ २ ॥

क्वापि विरहार्त्तैः पञ्चभिः श्लोकैर्जलधरप्रवेशसमयनिरतिशयप्रसूतकुसुमशरव्यतिकरव्यथाव्यथितसमस्तपथिकप्रमदाजनानां प्रियसखीमभिमुखी कृत्यव्याहरणं । ××××आदौ तावद् अर्धसमसुन्दरीनामवृत्तेन प्रथमश्लोकं व्याजहार—निचितमिति ।

CLOSING : यदीत्यध्याहार्यम् । यदि अहं जीयेय पराजीयेय । ××××× केन घटकर्प्परेण घटस्य कर्प्परः घटकर्प्परस्तेन घटकर्प्परेण खण्डेनेति सम्बन्धः ॥ २१ ॥

COLOPHON : इति घटकर्प्पराख्यं महाकाव्यं सटीकं समाप्तम् ।

## 1940. दुर्घटकाव्यं सटीकम्

OPENING : अर्हं नमः ।

लक्ष्मीवन् कृतकूरसूरणदहिन् दूधक् क्षमः पापडी-
लारूढो कलघीवडांछनवडी खाजाम्बुदालिरुचिः ।
मंडाशाकरखण्डनोवि विभुना क्षीरांवसा तुल्य मां,
सा सुंहालितडिन्निभांगवसनोऽव्याः सेवकं सारवान् ॥ १ ॥

हे लक्ष्मीवन् ! त्वं मां सेवकं अव्याः रक्ष । कथम्भूतः त्वं कृतकूः । ×××× सारवान् सारो बलमस्यास्तीति सारवान् पालनसमर्थः ॥ १ ॥

CLOSING

यावत्तोय······धरधरा धीराधराभूधराः,
यावच्चारुसुचारु ·······चमरं चामीकरं चामरम् ।
यावद् रावणरामरामरमणं रामायणं श्रूयते,
तावद्भोगविभोग·······भवनं भोगायते नित्यशः ॥ ८५ ॥

भोगेन धनेन विशिष्टो भोगः सुखं यस्य स भोगविभोगः तस्य सम्बोधने हे भोगविभोग । भोः सुखे धने इति विश्वप्रकाशः । ×××××××× रामणी रा रामा जानकी यस्यासौ रामणरामः स चासौ रामश्च रामणरामस्तेन रमणमित्यर्था इति वा ॥ ८५ ॥

COLOPHON . इति श्रीदुर्घटाख्यं काव्यं सुपूर्णम् ।

Post-Colophonic : संवत् १७७६ ना ज्येष्ट सूदि १५ शुक्रवारे । लपीकृतं पं० पुन्यसीलमुनिना । श्रीअहम्मदपुरे ।

## 1941. दुर्घटकाव्यं सटीकम्

श्रीसद्गुरवे नमः ।

OPENING : Same as at no. 1940

CLOSING : वनजौवनजौखर्वः त्रिरामी सकृपोऽकृप ।
कुर्वन्तु तव कल्याणं अवतारा हरेर्दश ।। ३७ ।।

[व्या०] मच्छकच्छौ नृसिंहवराहौ वामनः रामः परशुरामः बलिरामः बुद्धः कल्किः ।। ३७ ।।

COLOPHON : इति दुर्घटकाव्य सटीकः ।

Post-Colophonic : शीघ्रतयामलेखि ऋषि रतीरामेण पटयालानिगमे संवत् १८८६ मिति जेष्ठकृष्ण चतुर्थ्यां कविदिने: ।।

## 1964. मेघदूतं कल्पलताटीकासहितम्

OPENING : कश्चित्कान्ता विरहगुरुणा स्वाधिकारात्प्रमत्तः । × × × × ×

[व्या०] कश्चित् अनिर्दिष्टनामा यक्षो रामगिर्याश्रमेषु चित्रकूटपर्वतेषु वसतिं चक्रे निवासं कृतवान् । यद्यपि यक्षश्चैकाकित्वात् रामगिर्याश्रमेषु वचनं ज्ञाप्यं कथं बहुवचनं । × × × × × × × × प्रियाविरहमसहमानो रात्रौ कमलमुकुलानि अनैषीः । तस्मात् तव प्रिया (यया) सह वर्षं यावत् [वि]यो[गो]ऽस्तु ।। १ ।।

× × ×

CLOSING : [व्या०] कालिदास आर्यायाः सरस्वत्याश्चरणयुगलं चरणारविन्दद्वयं नत्वा इदं इत्थंभूतं प्रधानचरितं अतीवसौख्यप्रदम् ।।२७।।

COLOPHON : इति श्रीकविचक्रचूडामणिश्रीकालिदासकृतस्य श्रीमेघदूतमहाकाव्य[स्य] व्याख्या कल्पलता सम्पूर्णा ।

Post-Colophonic : संवत् १६५३ वर्षे वैशाखशुदि ६ शुक्रौ लिखितं साचुरमध्ये ।

## 1971. मेघदूत-सुखलताटीका

OPENING : ओं नमश्चण्डिकायै ।

कश्चिदिति । कश्चिदनिर्दिष्टनामा यक्षः रामगिर्याश्रमेषु चित्रकूटेषु वसतिं निवासं चक्रे अकरोत् । रामगिरेः आश्रमाः रामगिर्याश्रमाः तेषु । अनामग्राह्यः इति कथं । × × × × × × स्निग्धच्छायातरुषु स्निग्धच्छायातरवो वृक्षाः येषु ते स्निग्धच्छाया-तरवः तेषु । अत्र मन्दाक्रान्तच्छन्दः ।।१।।

CLOSING : श्रुत्वा वार्त्तामिति । धने················पि शश्वन्निरन्तरं इष्टान् भोगान् भोजयामास । × × × × × × विगलितशुचौ गतशोकौ । पुनः किंविशिष्टौ अवि-रतसुखं निश्चलसुखं यथास्यात्तथा तुष्टचित्तौ ।। २६ ।।

COLOPHON : ···············सविहितस्य **मेघदूतकाव्यस्य** वृत्तिः**सुखलता**नाम्नी पूर्णा ।

## 1984. वैराग्यशतकं सुबोधिनीटीकासहितम्

OPENING :

श्रीगणेशाय नमः ।

पुरा प्रार्थितौ ब्रह्मणा सामरेण स्वयं सद्गवां पालनायावतीर्णौ ।
सदानन्दमूर्ती श्रुतिध्येयरूपौ प्रभू रामकृष्णौ शरण्यौ नमामि ॥ १ ॥

नत्वा रामं तथा कृष्णं गुरुं चाभीष्टसिद्धिदम् ।
**वैराग्यशतके** भर्तृहरौ व्याख्यां करोम्यहम् ॥ २ ॥

इदानीं येनोदन्तेन श्रीभर्तृहरिर्भूपतिर्विरक्तोऽभूत् तं वृत्तान्तं प्रथमश्लोकेन उपनिबध्नाति—[यां चिन्तयामि सततमिति] ।

CLOSING : & COLOPHON :

इति वैराग्यशतकटीका समाप्ता ।

संवत्सरे खबाणाद्रिचन्द्रसंज्ञे शुभायने ।
सहस्ये मासे शुक्ले च चतुर्थ्यां बुधवासरे ॥ १ ॥

**नारायणपुरे** धर्मकर्मसज्जनमण्डिते ।
सौराज्यविशदे देवविप्रगोश्रुतिसंश्रये ॥ २ ॥

शेषावतावतंसोभौ **महासिंहचतुर्भुजौ** ।
भ्रातरौ राजतनयौ वदान्यौ हरिसेवकौ ॥ ३ ॥

तत्प्रयुक्तेन **मिश्रेण घनश्यामेन** धीमता ।
कृता भर्तृहरेरेषा वैराग्यशतकाश्रया ॥

**सुबोधिनी**ति विख्याता टीका बुधमनोहरा ।
यदत्र किञ्चित् स्खलितं प्रमादात् सद्भिर्गुणादानपरौ स्वबुद्धया ।
तच्छोधनीयं मयि संप्रयुज्या कृपानुवृत्तिः परमार्थना मे ॥

इति श्रीगुणगणमण्डितनिजकुलावतंसश्री**महाराजमहासिंहचतुर्भुज**प्रयुक्त**घनश्याममिश्र**रचितं **वैराग्यशतकटीका** समाप्ता ।

Post-Colophonic :

शाके युग्मयुगं वा षट्चन्द्रे संज्ञे शुभायने ।
भाद्रे शुक्लेह्नि चाष्टम्यां चन्द्रे शुभदिनेऽलिखत् ।
देविदत्त स्वबुद्धयर्थं टीकाभर्तृह······· ।

## 1998. शृङ्गारविलासिनी

OPENING :

श्रीकृष्णाय नमः ।

**छप्पय**– सुभगसिद्धि शुभवृद्धि सकलसंततसुखकारिणि ,
दुर्गतदुर्गदुरंतदुःखदारुणदरदारिणि ।
शरणागतनैपुण्यपुण्यकारुण्यविहारिणि ,
जगदनिरूपितरूपभूपभूपद्युतिधारिणि ।
निरमर्षहर्षवर्षितवचन - सुरनरर्षिहरिहरनुते ।
सु(कु)मतिघ्न विघ्नमपनय विभो जय जय जय गिरिवरसुते ॥ १ ॥

दोहा– रसिकमुदे च विलासिजन-मनः परानन्दाय ।
**शृङ्गारकविलासिनी** विहिता सुकविहिताय ॥ २ ॥

यदि **भरतादि**निरूपिता ग्रन्थास्सन्त्यपि सन्तु ।
सरसचमत्कृतिमत्कृतिः सुधियस्तत्र रमन्तु ॥ ३ ॥

CLOSING : **दोहा– देवदत्तकविरिष्टिका-पुरवासी** स चकार ।
ग्रन्थमिमं **वंशीधरद्विजकुलधरं** बभार ॥ ८९ ॥

**षट्पदी–** स्वरभूतस्वरभूमिमिते वत्सरे यदायं ,
**दिल्लीपतिरवरंगसाहि**रजयतादुपायम् ।
**दक्षिणदिशि** च तदैव **कुङ्कुणे** नामनि देशे ,
**कृष्णावेणी**नामनदीसङ्गमप्रवेशे ॥
श्रावणबहुलनवमीतिथौ रेवानीरे **रेवतीतीरे** ।
कवि**देवदत्त**उदितेखावगमापयद्दहनि स्तुते ॥ ९० ॥

COLOPHON : इति श्रीमत् **कविदेवदत्त**विरचिता **शृङ्गारविलासिनी** सम्पूर्णा ।

**दोहा–** वसुवर्णाष्टकभूमिते लिखिता ज्येष्ठसिते च ।
Post.-Colophon : हरिशङ्करद्विवेदिना पूर्णा गुरौ हिते च ॥ १ ॥

## 2004. सतसैया सटीका

OPENING : · श्रीगणाधिपतये नमः ।

मेरी भवबाधा हरो, राधा नागरि सोइ ।
जा तन की झांई परै, स्याम हरित दुति होइ ॥ १ ॥

सा राधानागरि राधानाम्नी नायिका मम भवबाधा संसारदुःखं आधिभौतिकादि-क्लेशं हरतु दूरीकरोतु । संसारक्लेशहरणेन निर्विघ्नग्रन्थसमाप्तिर्भवतु इत्याशीर्वाद-रूपं मङ्गलाचरणं व्यज्यते । × × × × प्रसिद्धिः विलाससमये इत्यर्थः ॥१॥

CLOSING : यद्यपि हे शोभा सहज मुकतनि तऊ सु देखि ।
गुहे ठोर की ठोर तें लरिस्यै होत विशेष ॥ ७१ ॥

यद्यपि मुक्तानां सहजा शोभा तथापि त्वं पश्य । यथास्थानं गुम्फिते सति सूत्र-गुम्फिते सति मुक्तापंक्तौ अधिका शोभा जायते ॥ ७०१ ॥

**विहारीदाससत्सैया - टिप्पणं संस्कृते** कृतः(म्) ।
तुष्यन्तु कवयस्तेन मम दोषो न दीयताम् ॥ १ ॥

COLOPHON : इति श्री**भट्टमेवाडाज्ञाति**-व्यासशुकदेवसूनुना **नाह्लाव्यासेन विहारीदाससत्सैयाटिप्पणं श्रुतबोधाख्यं** सम्पूर्णम् ।

Post-Colophonic : लिखितं ब्राह्मण गिरिनाराज्ञातीय भट्टविष्णुजीयेण लिखितमिदं पुस्तकं । संवत् १७०५ वर्षे पौष शुदि १० रवौ ।

## 2031. दमयन्तीकथाचम्पू

OPENING :

ओं नमः सर्वज्ञाय ।

जयति गिरिसुतायाः कामसन्तापवाहि-
न्युरसि रसनिषेकश्चन्दनश्चन्द्रमौलिः ।
तदनु च विजयन्ते कीर्त्तिभाजां कवीना,
मसकृदमृतबिन्दुस्यन्दिनो वाग्विलासाः ॥ १ ॥

× × ×

काव्यस्याम्रफलस्यापि कोमलस्येतरस्य च ।
बन्धच्छायाविशेषेण रसोऽप्यन्यादृशो भवेत् ॥ १७ ॥

CLOSING :

इति विहितवितर्कावेशविध्वस्तनिद्रः,
सजलजडिममीलत्पक्ष्मचक्षुर्दधानः ।
हरचरणसरोजद्वन्द्वमाधाय चित्ते,
नृपतिरुभयसंगी स त्रियामामनैषीत् ॥ ३ ॥

COLOPHON : इति समविषमकवि**श्रीत्रिविक्रमभट्टस्य**कृतौ **दमयन्तीकथायां** विबुधजनमनोहारिण्यां हरचरणसरोजाङ्कः सप्तमः उत्श्वासः समाप्तः ।

Post.-Colophon : ग्रन्थाग्रं. २५०० । शशिरसवेदशशिप्रमिते वर्षे । बाहुलबहुलपक्षसप्तमीदिने । धिषणवारे प्रतिरियमलेखि श्रीमद् **रिणीपुरवरे** । उ० श्रीगुणरङ्गगणितच्छिष्यज्ञान-विशालेन । पं० हेमसोमगणिशिष्य पं० ज्ञाननन्दिपठनार्थम् ।

## 2032. कथासङ्ग्रहः

OPENING :

अर्हन् देवो गुरुः साधुर्धमो सर्वज्ञभाषितः ।
एतत् त्रयं स्थिते चित्ते सम्यक्त्वं तस्य निर्मलम् ॥ १ ॥

CLOSINGS & COLOPHONS :

इयं आरामनन्दनकथा समाप्ता । उद्धरिता वा० रत्नलाभगणिना । चन्द्रप्रभ-चरित्रात् । [f. 7]

× × ×

इति विनयविषये हरिषेणश्रीषेणकथा समाप्ता । (f. 13)
[इति कामकेतुकथा । (f. 16)
इति भयाद्दाने सोमस्य कथा समाप्ता । (f. 17)
इति उपरोधदाने सुन्दरकथा (f. 19)
सुपात्रे भावदाने वणिक्सुतस्येयं कथा । (f. 19)
इति दाने कामकेतु कथा । (f. 20)
इत्यदाने कुरङ्गकथा समाप्ता । (f. 21)
इति तपसि दासीदृष्टान्त अतपसि मानपुञ्जः (f. 23)
इति भावनायामसम्मतकथा । (f. 24)

इति अभावे वरुणदृष्टान्तः । (f. 25)

इति नियमे सिद्धकथा समाप्ता । (f. 26)

इति जीवरक्षायां मन्त्रिदासीकथा । (f. 28)

इति सत्यव्रते स्मरनन्दनकथा । (f. 30)

इति अदत्तादाने दानप्रियकथा । (f. 31)

इति चतुर्थव्रते मदनमञ्जरीकथा । (f. 34)

इति परिग्रहप्रमाणे धर्ममतिकथा । (f. 35)

इति श्री **चन्द्रप्रभचरित्राद्धुर्धरितं** वा० **श्रीरत्नलाभगणिना श्रीक्षमारङ्गगणीनां** शिष्येण ।

## 2034 धम्मिल्लचरितम्

OPENING :

अर्हम् । ओं नमो वीतरागाय ।

बोधिबीजं सतां स्वान्तभूमौ वप्तुमना इव ।
योऽधाद् वृषं पदोपान्ते स श्रीमान् ऋषभः श्रिये ।। १ ।।

× × ×

वृणोति सकला सम्पत् करुणाभाजनं जनम् ।
**चरित्रं धम्मिलस्यात्र** साक्षात् कुर्मः प्रतीतये ।। १८ ।।

CLOSING :

स श्रीनाभिनरेन्द्रनन्दनजिनः श्रेयांसि देयाच्चिरं ,
यस्थाम्ना त्रिजगत्पराभवकरं भूपं जिगाय स्मरम् ।
स्कन्धद्वन्द्वनिलीनकुन्तलततिव्याजेन चर्याक्षर-
न्यासं वैरिजयप्रशस्तिरमला तेनैव किं लक्ष्यते ।। १ ।।

× × ×

कविचक्रधरः श्रीमान् **सूरिश्रीजयशेखरः** ।
नाऽपि वेधविधातुं यत् कवित्वगणिनां विभुः ।। ७ ।।

**प्रबोधचिन्तामणि**रद्भुतस्तथो**पदेशचिन्तामणि**रर्थपेशलः ।
व्यधायि **यैर्जैनकुमारसम्भवा**भिधानतः सूक्तिसुधासरोवरम् । ८।।

विज्ञार्थितैस्तैः किल **धम्मिलस्य** प्रशस्यमेतच्चरितं वितेने ।
निपीयतां तत्र पवित्रपुण्यरसं सरस्यामिव भव्यलोकः ।। ९ ।।

द्विषट्वारिधिचन्द्राङ्कवर्षे विक्रमभूपतेः ।
अकारि तन्मनोहारि पूर्णं **गूर्जरमण्डले** ।। १० ।।
तत्र त्रीणि सहस्राणि तथा पञ्चशतानि च ।

ग्रन्थाग्रं० ३५००

## 2038. वासवदत्ता-टीका

OPENING पण्डितश्रीहर्षविमलगणिगुरुभ्यो नमः ।

पायाद् वो गोसहस्रेण क्रीडन् गोपालको हरिः ।
प्रकाशदं तथा तेन भिन्दानोध्वान्तकुञ्जरम् ॥ १ ॥

× × ×

CLOSING : **श्रीनारायणदीक्षितं** हरिपदद्वन्द्वारविन्दे रतं ,
**सावित्री** सुषुवे त्रिकर्मनिचयं **श्रीविश्वरूपश्च** यम् ।
तेनौद्धृत्य (द्धत्य) विवर्जितेन गुणिना संक्षिप्य **नारायणी**-
नाम्नीयं रचिता सदर्थखचिता व्युत्पत्तिवृद्धयै सताम् ॥ १ ॥

रूपभूतगुणक्षोणीयुते विक्रमवत्सरे ।
**टीकां वासवदत्ताया** निरमान्नारायणो**ऽग्निचित्** ॥ २ ॥

COLOPHON: इति **श्रीदीक्षितनारायण**विरचितायां **वासवदत्ताटीकायां** चतुर्थः प्रघट्टकः समाप्तः । समाप्तोयं ग्रन्थः ।

Post-Colophonic : संवत् १७३० वर्षे कार्तिकवदि १ दिने । श्रीभुजनगरे । पण्डितश्रीशान्तिविमल-गणिशिष्य पंडितश्रीकेसरविमलगणिपठनार्थं लिखिता पं० । कनकविमलगणिना ।

## 2039, विक्रमादित्योत्पत्तिकथा

OPENING : गूर्जरमण्डले साम्भ्रवती महिनद्योरन्तराले वनं विद्यते । तत्र तामलिप्तर्षिस्तस्य पुत्री यशोमती । तस्या भर्त्ता ताम्रसेनराजा तयोः सांसारिकसुखमुपभुज्यमानयोः पुत्री मदनरेखा समुत्पन्ना ।

CLOSING : इतश्च राज्ञः शुद्धिर्जाता । पुत्रीगर्भं मालिनी गृहीत्वा गता राजा उभयभ्रष्टो जातः । न पुत्रो न पुत्री । ततो राजा नगर्यास्त्रम्बावती नाम यातम् ।

COLOPHON : इति विक्रमादित्योत्पत्तिकथा सम्पूर्णा ।

Post-Colophonic : गणि रूपचन्द्रेण लि० ।

## 2043. कमला-भारतीसंवादः

OPENING : ओं नमः श्रीभुवनेश्वर्यै ।

अथ **कमलाभारत्योः संवादं** सादरं वदत ।
पर्यङ्कीकृतपाथो यदुनाथो मे मुदे भूयात् ॥ १ ॥

CLOSING : पयोधिप्रोद्भूते प्रसभमभितो भूप्रभृतयः ,
पतन्त्यङ्घ्रिप्रान्ते प्रचुरतपसः शान्तमनसः ।
सुगन्धस्रग्बन्धावभिनवभवद्वासभवने ,
प्रभावो भारत्या भृगुचरणचिन्हं हृदि हरेः ॥ २३ ॥

COLOPHON: इति **श्रीमधुसूदनभट्ट**विरचितः **कमलाभारतीसम्वादः** सम्पूर्णम् ।

## 2046 भरटकद्वात्रिंशिका

OPENING :

देवदेवं नमस्कृत्य श्रीगुरूंश्च यथाश्रुतम् ।
द्वात्रिंशद्भरटकानां लिख्यन्ते कुतकात् कथा ।। १ ।।

CLOSING :

त्वया मम गुप्तगालिर्दत्ता राज्ञाऽग्रे चल । एवं [क] लहं कुर्वाणो लोकैर्निवारितः । कष्टेन । ततो हृष्टो पण्डितो गृहं जगाम ।

COLOPHON :

इति भरडकद्वात्रिंशका सम्पूर्णा भवतु ।। ६०० ।।

## 2048. विनोदकथा

OPENING :

नरसमुद्रे ढिल्यां कश्चिद् वैदेशिकः सकोपीनः सयष्टिः सन्ध्यायां आजगाम । गणिकागृहे यष्टिमड्डाणके मुक्त्वा वासकं स्थितः । प्रातर्यद् अद्य राजा दास्यति तन्मया तव प्रदातव्यम् ।

CLOSING :

मूर्ख त्वं सि । त्वया नर्त्तयत्वा मन्मनोरञ्जतो । मया तु मानयित्वा न मनोरञ्जिते । अत्र किं मार्गणं किंच दानं अदातरि ।। २६ ।।

COLOPHON :

इति विनोदकथा समाप्ता सम्पूर्णाः ।

## 2049. विनोदकथासंग्रहः सावचूरिः

OPENING

योऽपि सोऽपि ध्रुवं ग्राह्यो नियमः पुण्यकांक्षिणा ।
सोऽल्पोऽप्यनल्पलाभाय कमलश्रेष्ठिनो यथा ।। १ ।।

[अव०] श्रीपुरे श्रीपतिसुन्दरीसूः । निर्द्धर्मो निर्गुणः । गुरुदेशनाश्रवणं १०८ वारान् घण्टिकाचलन १ कीटिकागुणनं २ । × × × × × रत्ननिधिः स्वर्गाच्च्युतः सेत्स्यति ।। १ ।।

CLOSING :
&
COLOPHON :

क्रियाः सर्वाः कामदुघाः प्राक्पुण्यः बलवद् यदि ।
तथाहि पथ्यं वैद्यस्य पथ्यासीत् सर्वसिद्धिदा ।। ७५ ।।

इति **मलधारिश्रीराजशेखरसूरिकृता** ।

[अव०] कर्पूरग्रामे विप्रष्टिप्पनकवैद्यः । भिन्नरुग् अर्हाणि चूर्णानि मेलं मेलं स्थालीषु क्षेपं क्षेपं मुमोच । × × × × × तुष्टा सा पथ्या वैद्यमाकार्यऽपूपुजत् ।

इति विनोदकथा ।

## 2052. सिंहासनद्वात्रिंशिका

OPENING :

ओं नमः श्रीपार्श्वनाथाय । नमो गुरुभ्यो नमः ।

श्री[मन]नाभिनरेन्द्रवंशमुकुटालङ्कारहीरप्रभं ,
भास्वन्तं परमेश्वरं सुरनरैः पूज्यं परानन्ददम् ।
स्वर्णाभं वृषभाङ्कितं जिनपतिं श्रीदर्भिकायां स्थितं ,
नौमि श्रीवृषभ जिनं जितभयं योगीश्वरं योगदम् ।। १।।

× × × ×

श्रीसाधुपूर्णिमापक्षकानने कल्पपादपाः ।
श्रीमद्भव्यचन्द्राख्या गुरवः शं दिशन्तु मे ।। १ ।

तेषां पादप्रसादेन विक्रमादित्यभूपतेः ।
सिंहासनप्रबन्धोऽयं पद्यबन्धेन रच्यते ।। ६ ।।

क्षेमङ्करमुनीन्द्रेण विबुधानन्ददायिनाम्(ना) ।
गद्यपद्यमयोऽकारि जिनानन्ददायकः ।। ७ ।।

CLOSING :

सिंहासनप्रबन्धेऽस्मिन् विक्रमादित्यभूपतेः ।
श्रीरामचन्द्रसर्युक्तजाता द्वात्रिंशमी कथा ।। ९ ।।

इति सिंहासन द्वात्रिंशिकायां द्वात्रिंशतितमा समाप्ताः । ग्रन्थाग्रं.

श्लोक ६५ अ. १८ ।

अथातः सर्वतोभद्रसिंहासनस्थिता वराः ।
द्वात्रिंशत् पुत्रिका तत्र चलत्कुण्डलभासुराः ।। १ ।।

× × ×

तज्ज्ञात्वा कुपितः शक्रोऽस्माकं शापं ददौ तदा ।
रे रे यूयं दुराचारा वि× × × × × ×[।। १८ ।]

## 2053. सिंहासनद्वात्रिंशिका

OPENING :

अर्हम् ।

अनन्तशब्दार्थगतोपयोगिनः पश्यन्ति पारं नहि यस्य योगिनः ।
जगत्त्रयाशेषतमोविनाशकं ज्योतिः परं तज्जयति प्रकाशकम् ।। १ ।।

× × ×

ये पूजनीयाः सुमनःसमूहैः ते सन्तु मे श्रीगुरवः प्रसन्नाः ।
सदा नवो यत्प्रतिभाप्रकर्षः पुनन्तु ते श्रीकवयश्च वाचम् ।। ३ ।।

सकलसुरासुरसूरिनिकरनायकप्रणतपादारविन्दश्रीसर्वज्ञशासनप्रभावकस्य परमगुरुश्री**सिद्धसेनदिवाकर**प्रणीतोपदेशपेशलविवेकस्य जगद्वर्यधैर्यगाम्भीर्यपरमौदार्यादिगुणगणालङ्कृतस्य विक्रमाक्रान्तत्रिविक्रमस्य **श्रीविक्रमनरेश्वरस्य** कश्चित् **प्रबन्धः** प्रारभ्यते ।

CLOSING :

**श्रीभोजराज** यः कश्चिदेतत् **श्रीविक्रमादित्यचरित्रं** देवाङ्गनासंवादसुन्दरं पठिष्यति श्रोष्यति वाचयिष्यति समाचरिष्यति तस्य धृतिकीर्त्तिलक्ष्मीसकलसौख्यावाप्तिर्भविष्यतीति वरं दत्वा देवाङ्गनाः स्वर्गं जग्मुः । श्रीभोजराजस्तु जलधिमेखलायामखण्डशासनश्चिरं रराज लक्ष्म्या ।

COLOPHON :

इति **सिंहासनद्वात्रिंशिकाकथानकं** सम्पूर्णं समाप्तम् ।

## 2062. प्रज्ञाप्रकाशषट्त्रिंशिका

OPENING :

श्रीगणेशाय नमः ।

प्रज्ञाप्रकाशाय नवीनपाठी श्रीमारुदेवं वृषभं प्रणम्य ।
काव्यानि चाहं कवयामि यानि तज्ज्ञैर्विशोध्यानि समानि तानि ॥१॥

CLOSING :

**लुङ्काख्यगच्छाम्बर**मित्रतुल्य**यशस्विनामा** गणिनां गरिष्ठः ।
तस्य प्रसादाच्च **सुभाषितानां षट्त्रिंशिकेयं** मयका प्रणीता ॥ ३७ ॥

COLOPHON : इत्याचार्यश्रीमद्**रूपसिंह**विरचिता श्री**प्रज्ञाप्रकाशषट्त्रिंशिका** समाप्ता ।

Post-Colophonic : लिख्यतं स्थिवरजी श्री श्री १०८ श्रीचैनरांमजी । ऋ. ईन्द्रभांणपठनार्थम् ॥

## 2074. साहित्यरत्नावली

OPENING :

श्रीगणेशाय नमः ।

अथ साहित्यरत्नावलीप्रारम्भः—

श्रीमद्रुद्रजितं गुरुं गणपतिं नत्वा च वागीश्वरीं,
विद्वद्वृन्दविनोदनार्थममलां **साहित्यरत्नावलीम्** ।
कुर्वे तां सुकृती नरोप्यधनवान् कण्ठे स्वकीये न्यसेत्,
तस्य श्रीरनपायिनी किल भवेत् कीर्तिश्च देशान्तरे ॥१॥

CLOSING :

**ओडग्राम**निवासिना विरचिता **साहित्यरत्नावली**
**श्रीगौडोदयराम**नामकविना वृत्तै रनेकैर्मया ।
विद्वद्वृन्दमुदेऽत्र भो बुधजनाः कृत्वा तु दोषं बहि–
रङ्गीकृत्य गुणं कुरुध्वमनिशं तां कण्ठभूषामिमाम् ॥२६॥

COLOPHON : इति श्रीसाहित्यरत्नावली नाम ग्रन्थः ।

Post-Colophonic संवत् १६०६ सरावणवदि १३ वार गुरु लीखी व्यास रणछोड लक्ष्मीरांम । पत्तननगरवास्तव्यं ज्ञाति दिकपाल अवटंक व्यासाभिध लक्ष्मीरांमआत्मज रणछोड-नामेन लिपिकृतां स्वात्मपठनार्थं परोपकारार्थम् ।

## 2097. नीतिशतकं सुबोधिनीटीकासहितम्

Ct.-OPENING :

श्री गुरुदेवजी नमः ।

परमात्मानमानम्य परमानन्दविग्रहम् ।
सज्ज्ञानप्राप्तये नृणां कुर्वे सन्नीतिवर्णनम् ॥ १ ॥

श्रीमत्**पुष्करव्यासस्य** सुतः **श्रीनाथ**संज्ञिकः ।
**सन्नीतिशतक**स्यास्य टीकां कुर्वे यथार्थतः ॥ २ ॥

न चात्र रचनागुर्वी न चात्र कविचातुरी ।
यथार्थख्यायिनी टीका कृतेयं **सुखबोधिनी** ॥ ३ ॥

Ct.-CLOSING : श्रीमत्श्री**मदिरदासव्यास**तनयो न्यायादिविद्यार्थवित्,
श्रीमत्**पुष्करदास**नाम विदितो विद्याप्रवीणः कविः ।
तस्याभूत्तनुजो विशालयशसः **श्रीनाथ**नामा सुतः,
टीका तेन कृता हि **भर्तृनृपतेः** काव्यार्थसंख्यायिनी ॥१॥

COLOPHON : इति श्री**व्यासश्रीनाथ**विरचिता **भर्तृशतकनीति**काव्यार्थख्यायिनी **सुबोधिनी** नाम टीका प्रथमशतकस्य समाप्ता ।

## 2101. चन्द्रगुप्तकुटगडुककथा

OPENING : कोहे घेवरखवगो इत्यादि यथा—हत्थिकप्पे नयरे एगो साहू मासक्खभणपारणदिने भिक्खं हिंडंतो धिज्जाइ ।

CLOSING : चुन्नजोगं दव्वलोचनांजनप्रयोजनं च दोषस्तत्र च
उदाहरणम्—पाडलिपुत्तेनयरे आसीनिवो सयललक्खणसमेयो ।
नामेण चंदगुत्तो चाणक्को तस्स वरमंती ॥ १ ॥

COLOPHON : इति ह[? दि]व्यांजनयोगविषये चन्द्रगुप्तकुटगडुगकथा ।

## 2124. लघुवैयाकरणभूषणसारकान्तिटीका

OPENING

श्रीगणेशाय नमः ।

नमस्कृत्य गणाध्यक्षं नृसिंहं कमलायुतम् ।
बुद्धिप्रभावर्द्धयित्रीं संहर्त्तां दुरितस्य च ॥
सम्पादयित्रीं कामानां प्रापयित्रीं श्रियःश्रियम् ।
तातं शंभुं सतीं दुर्गां **पाणिनि**प्रभृतीन् मुनीन् ॥
**बालंभट्टा**भिधं **पायगुण्डो**पाख्यं परं गुरुम् ।
**गोपालदेव**नामाऽसौ पण्डितो बालबुद्धये ॥
**कृष्णदेवानुजो** लोके **मनुदेवा**पराभिधः ।
अनुसृत्य नयं प्राचां नव्यानां लेशतस्तथा ॥
**लघुनो भूषणस्येमां कान्तिं** वितनुते सुधीः ।

CLOSING : & COLOPHON : इति **लघुभूषणकान्तौ** धात्वाख्यातार्थनिर्णयः ।

## 2143 शब्दपरिच्छेदः

OPENING : श्रीगणेशाय नमः ।

अनुमित्यर्थकधातुयोगे विधेयत्वं विधेयित्वं वा द्वितीयार्थः ते वह्नयादिपक्षकानुमितिपरस्य वह्निमनुमिनोमि इत्यादिवाक्यस्य न प्रामाण्यम् ।

COLOPHON : इति शब्दपरिच्छेद [ : ] समाप्तः ।

## 2154. स्फोटचन्द्रिका

OPENING :

श्रीमारुतिर्जयतितराम् ।

पित्रोः पादयुगं नत्वा जानकीरुघ(रघु)नाथयोः ।
**मौनिश्रीकृष्णभट्टेन** तन्यते **स्फोटचन्द्रिका** ।। १ ।।

COLOPHON :

इति स्फोटचन्द्रिका समाप्तः ।

## 2158. कातन्त्रविभ्रमसूत्रं सटीकम्

Ct.-OPENING :

नत्वा रमेशं स्वगुरुं च भक्त्या तत्संप्रसादाप्तसुसिद्धिशक्त्या ।
तत्सम्प्रदायादवचूर्ण(र्णि)मेतां लिखामि सारस्वतसूत्रयुक्त्या ॥ १ ॥

प्रायः प्रयोगाः दुर्ज्ञेयाः किल **कातन्त्रविभ्रमे** ।
येषु मोमुह्यते श्रेष्ठः शाब्दिकोऽपि यथा जडः ॥ २ ॥

**कातन्त्रसूत्र**विसरः खलु साम्प्रतं यन्नातिप्रसिद्ध इह चातिखरो गरीयान् ।
स्वसेतरस्य च सुबोधविवर्द्धनार्थं चिच्छं विमात्रस्सफलो लिखितप्रयासः ।। ३ ।।
कस्य धातो इति ।

Ct.-CLOSING :

संवद्रामरसाद्रिभूपरिमिते वर्षायने दक्ष(क्षि)णे ,
पौषे मासि शुचौ तिथिप्रतिपदि द्राङ् भौमवारेऽकरोत् ।
श्री**मन्नागरनीलकण्ठ**तनयो नाप्रान्त **गोपालक-**
**ष्टीकामस्य** विशुद्धरम्यसुगमां काव्यस्य दुर्ज्ञस्य वै ।। १ ।।

COLOPHON .

इति **कातन्त्रविभ्रमकाव्यस्य टीका**समाप्त्यभूत् ।

Post-Colophonic :

संवत् १९३४ का मिती अगहनासिते पक्षे तिथौ ५ भानुवासरे अलिखत् ऋ । हरचंदेन श्रीपार्श्वचन्द्रसूरिगच्छे भट्टारकोत्तमभट्टारकजी श्री श्री श्री श्री १००८ श्री श्री श्री श्री श्री हेमचन्द्रसूरिजीद्भिः चरणकमले सेवाकरणार्थं श्रीमक्सूदावादस्याजीमगंजे श्रीजान्हवीतटे स्थितमस्ति ।

## 2159. कातन्त्रविभ्रमावचूरिः

OPENING :

नत्वा जिनेन्द्रं सुगुरुं च भक्त्या तत्सत्प्रसादाप्तसुसिद्धिशक्त्या ।
सत्सम्प्रदाया**दवचूर्णि**मेतां लिखामि **सारस्वतसूत्रयुक्त्या** ॥ १ ।।

प्रायः प्रयोगाः दुर्ज्ञेयाः किल **कातन्त्रविभ्रमे** .
येषु मोमुह्यते श्रेष्ठः शाब्दिकोऽपि यथा जडः ॥ २ ॥

कातन्त्रसूत्रविसरः खलु साम्प्रतं यन्नातिप्रसिद्ध इह चातिखरो गरीयान् ।
स्वस्येतरस्य च सुबोधविवर्द्धनार्थोस्त्वित्थं ममात्र सफलो लिखितप्रयासः ।।३।।

कस्य धातोस्तिबादीनामेकस्मिन् प्रत्यये स्फुटम् । × × × × गॄ निगरणे गॄ अष्टसु स्थानेषु स्थाप्यः अव पूर्वः अग्रे अनद्यतने ध्वं प्रत्ययः ।

CLOSING :

बाणाश्वषडिन्दुमिति संव्वति **धवलकपुरे** वरे समहे ।
**श्रीखरतरगण**पुष्करसुदिवापुष्टचकाराणां ॥ १ ॥

**श्रीजिनमाणिक्या**भिधसूरीणां सकलसार्वभौमानाम् ।
पट्टे वरे विजयेषु **श्रीमज्जिनचन्द्रसूरि**राजेषु ॥ २ ॥ गीतिः

वाचक**मतिभद्रगणैः** शिष्यस्तदुपास्त्यवाप्तपरमार्थः ।
**चारित्रसिंह**साधुर्व्यदधा**दवचूर्णिमिह** सुगमाम् ॥ ३ ॥

यल्लिखितं मतिमान्द्यादनृतं प्रश्नोत्तरेऽत्र किञ्चिदपि ।
तत्सम्यक् प्राज्ञवरैः शोध्यं स्वपरोपकाराय ॥ ४ ॥

COLOPHON : इति कातन्त्रविभ्रमावचूरिः ।

Post-Colophonic : पट्टणामध्ये शिवमूर्त्तिना लिपीकृतं शास्त्रम् ।

## 2163. सारस्वतटिप्पणम्

OPENING : नमः चिदात्मने ।

तदर्थतत्त्वाभिनिविष्टबुद्धिगर्वप्रतिक्षेपकयुक्तिलेशैः ।
अल्पैः पदैः व्याकरवाम कामं **सारस्वतं** व्याकृतमप्यनल्पः ॥

CLOSING :

**कृष्णाश्रमः** श्रीचरणोपसत्तिमवाप्य सम्प्राप्तमतिप्रकर्षः ।
**क्षेमेन्द्र**सूरि**र्हरिभट्टसूनुः सारस्वते टिप्पण**मभ्यधत्त ॥ १ ॥

व्याख्या गुणान् परीक्षे (क्ष्ये) ह चिरं नन्दतु सज्जनः ।
दुर्जनोऽप्यसतो दोषान् दुष्टाशयपरिस्फुटान् ॥ २ ॥

COLOPHON : इति श्री**नरेन्द्राचार्य-सारस्वते क्षेमेन्द्रकृतं टिप्पनं** सम्पूर्णम्

## 2166. सारस्वतटीका

OPENING : ओं श्रीपरमात्मस्वरूपाय नमः । श्रीगुरुभारतीभ्यां नमः ।

आनन्दैकनिधिं देवमन्तरायतमोरविम् ।
दयानिलयनं वन्दे वरदं द्विरदाननम् ॥ १ ॥

श्रीवाग्देवतायाश्चरणारविन्दमानन्दसान्द्रे हृदि सन्निधाय ।
श्री**पुञ्जराजः** कुरुते मनोज्ञां **सारस्वतव्याकरणस्य** टीकाम् ॥ २ ॥

CLOSING :

इति प्रसन्नया वाचा विवस्या (क्षा) र्थंशशं (मसं) शयम् ।
**टीका सारस्वतस्येयं** यथामति विनिर्मिता ॥ १ ॥

हिमालयादामलयाचलादौ विशोभयामास महीं यशोभिः ।
आसीन्नृपालः स्पृहणीय संपत्, साधुः **स देपाल** इति प्रसिद्धः ॥ २ ॥

× × ×

सोऽयं **टीकां** व्यरचयदिमां चारु **सारस्वतस्य**,
व्युत्पित्सूनां समुपकृतये **पुञ्जराजो नरेन्द्रः** ।

गम्भीरार्थैरुचितविवृतैः स्वीयसूत्रैः पवित्रा-
मेनामभ्यस्यत इदमुदा शारदास्तु प्रसन्ना ॥ २२ ॥
व्याख्याविशेषोन्नयनप्रसङ्गात् **श्रीपुञ्जराजो** यदिहाऽभ्यधत्त ।
अविस्तरं चारु विनिश्चितार्थं सर्वं समूलं समुपेक्षितं तत् ॥ २३ ॥

COLOPHON: इति **श्रीश्रीमालकुलश्री श्रीमालभारश्रीपुञ्जराज**निर्मिता **श्रीसारस्वतटीका** सम्पूर्णा लिखिता ।

Post-Colophonic: संवत् १६२१ वर्षे आश्विनमासे कृष्णपक्षे अद्येह **श्रीअनन्तरपल्लिग्रामे** सारस्वत-टीका प्रति मं. सहदे सं. यादव उभयोः सम्भूय ज्ञानकोशो ववृधे ।

## 2169. सारस्वतटीका

OPENING: ओं नमः श्रीपरमात्मने ।

अलिकुलमण्डितगण्डं प्रत्यूहव्यूहतिमिरमार्त्तण्डम् ।
सिन्दूरारुणशुण्डं देवं वेतण्डतुण्डमवलम्बे ॥ १ ॥

CLOSING: पृथ्वीमण्डलमौलिमण्डनमणिः **श्रीशेषवंशामलो-**
त्तंसः **श्रीनरसिंहसूरि**रभवत् प्रत्यक्षवाचस्पतिः ।
तत्सूनोः कृतगूढभावविवृतौ **सत्प्रक्रियाव्याकृतौ ।**
**श्रीकृष्णस्य** कृतौ समाप्तिमगमद् द्वित्वाश्रया प्रक्रिया ॥ १ ॥

COLOPHON: इति द्विरुक्तप्रक्रिया सम्पूर्णा ।

It is a ct. on Prakriyā-Kaumudī to be classified under 13(i) Pāṇinīya

## 2173 सारस्वत-टीका 'दीपिका'

OPENING: ओं नमो ब्रह्मात्मिकायै । श्रीगुरुचरणकमलेभ्यो नमः ।

नमोऽस्तु सर्वकल्याणपद्मकाननभास्वते ।
जगत्त्रितयनाथाय परमाय परमात्मने ॥ १ ॥

CLOSING: **सुबोधिकायां** क्लृप्तायां **सूरिश्रीचन्द्रकीर्तिभिः ।**
कृत्प्रत्ययानां व्याख्यानं बभूव सुमनोहरम् ॥ १ ॥

× × ×

श्री**चन्द्रकीर्त्ति**सूरीन्द्रपादाम्भोजमधुव्रतः ।
**हर्षकीर्त्ति**रिमां टीकां प्रथमादर्शकेऽलिखत्* ॥ ८ ॥
अज्ञानध्वान्तविध्वंसविधाने दीपिकानिभा ।
दीपिकेयं विजयतां वाच्यमाना बुधैश्चिरम् ।

---

*Harṣakīrti was not the commentator as mentioned in the text but he was only the first to copy out this work.

COLOPHON: इति श्रीमन्नागपुरीयतपागच्छाधिराजभट्टारकश्रीचन्द्रकीर्तिसूरिविरचिता श्रीसारस्वतव्याकरणस्य दीपिका सम्पूर्णा: ।

Post-Colophonic : संवत् १६४६ वर्षे आसोशुदि १ भौमे । श्रीपूर्णिमापक्षे गच्छाधिराजश्री५श्री ललितप्रभसूरितत्शिष्य मुनि-गुणराजेन लिखितम् ।

## 2176. सारस्वत-दीपिकाटीका

OPENING & CLOSING : The Same as at 2173.

## 2218. सारस्वतप्रसादः

OPENING: श्रीपार्श्वनाथाय नमः । ओं नमः सरस्वत्यै । ओं श्रीगणेशाय नमः ।

ओं नमो गुरवे ।

वन्देय वृन्दारकवृन्दवन्द्यपादारविन्दं दलितारिवृन्दम् ।
आभान्तमाधी(भी)रवधूभिरेतं गोपालभूपालमलं कृपालुम् ॥ १ ॥

यस्या निवासाद् वदनारविन्दे मन्दोपि वाचस्पतितामुपैति ।
सहस्रलम्पूर्णसुधांशुभासा सरस्वती सा सृजतान्मतिं मे ॥ २ ॥

श्रीचण्डीश्वरमानम्य दुण्ढिराजं तथा गुरुम् ।
सारस्वतप्रसादोऽयं वासुदेवेन दीव्यते ॥ ३ ॥

CLOSING: श्रीचण्डीश्वरशिष्येण वासुदेवेन दीपिते ।
सारस्वतप्रसादेऽभूत् कृत्प्रत्ययनिरूपणम् ॥ १ ॥

× × ×

संवत्सरे वेदवह्निरसभूमिसमन्विते ।
शुचौ कृष्णद्वितीयायां प्रसादोऽयं निरूपितः ॥ ४ ॥

COLOPHON : इति श्रीभट्टवासुदेवविरचितः सारस्वतप्रसाद सम्पूर्णम् ।

वर्षेऽद्रिनागाष्टशशांकनाम्नि ऊर्जे सिते चन्द्रदिने दशम्याम् ।
पुर्यां विहारीऋषिणा शुभायां श्रीकोटलायां लिखितो हि ग्रन्थः ॥ १ ॥

उत्तराधगच्छाधीशश्रीश्रीश्रीश्रीश्रीश्री १०८ श्रीमदातपत्रधारकजैनाचार्यविमलचन्द्रस्वामीजी तच्छिष्येण विहारीऋषिणा लिखितः सारस्वतप्रसादः श्री १०८ श्रीमत्पूज्याचार्यरामचन्द्रस्य शासने प्रवर्त्तमाने शुभं भवतुतराम् लेखकपाठकानां यन्मया किञ्चिदशुद्धमपि लिखितं तत्सुज्ञैः शोधनीयम् ।

## 2244. सिद्धान्तचन्द्रिका

OPENING : श्रीगणेशाय नमः ।

धातोः इदमधिक्रियते भ्वादिः क्रियावचनो भ्वादिर्धातुसंज्ञः आदनुदात्तङितः अनुदात्तेतो ङितश्च धातोरात् ञित् ।

CLOSING :

अवताद्वो हयग्रीवः कमलाकर ईश्वरः ।
सुरासुरनराकारः मधुपापीतपत्कजः ॥ १ ॥

COLOPHON :

इति श्री**रामाश्रम**विरचितायां **सिद्धान्तचन्द्रिका**तृतीयवृत्तिसमाप्तिमगमत् ।

## 2263 लिङ्गानुशासनं सविवरणम्

OPENING :

अर्हम् ।

श्री**सिद्धहेमचन्द्रव्याकरण**निवेशितानि लिङ्गानि ।
**आचार्यहेमचन्द्रो विवृणोत्यर्हं** नमस्कृत्य ॥ १ ॥

पदं वाक्यमव्ययं वेत्यसंख्यं च तद्बहुलं । विपुलावृत्तम्
निःशेषनामलिङ्गानुशासनान्यभिसमीक्ष्य संक्षेपात् ।
**आचार्यहेमचन्द्रः** समदृ(जृ)म्भद**नुशासनानि लिङ्गानाम्** ।

COLOPHON :

इत्मा**चार्यश्रीहेमचन्द्र**विरचितं **स्वोपज्ञलिङ्गानुशासनविवरणं** समाप्तम् ।
ग्रन्थाग्रं. ३३८५

Post.-Colophonic :

संवत् १६५७ वर्षे पोषमासे शुभ्रपक्षे प्रतिपत्तिथौ कविवासरे कोरटानगरमध्ये मुनिखीमाकेन लिखितम् ।

## 2274. हैमविभ्रमसूत्रवृत्तिः

OPENING :

अर्हम् ।

निखिलजगदेकशरणं भव्याम्भोरुहविकासनपटिष्ठम् ।
मोहान्धकारभिदुरं श्रीवीरार्कं परं नौमि ॥ १ ॥

× × ×

सकलभुवनैकतिलकः कुमतध्वान्तकषणैकदक्षतमः ।
नित्योदितः स्थिरतरो जयति श्री**देवसूरिरविः** ॥ ४ ॥

**सुखप्रबोधिकावृत्तौ** रूपसिद्धिसमन्विता ।
**सिद्धहेमानुसारेण** क्रियते **तन्त्रविभ्रमे** ॥ ५ ॥

CLOSING :

अकारि **गुणचन्द्रेण** वृत्तिः स्वपरहेतवे ।
**देवसूरि**क्रमाम्भोजचञ्चरीकेण सर्वदा ॥ २ ॥

× × ×

षट्तर्ककर्कशमि(म)तिः कविचक्रवर्ती शब्दानुशासनमहाम्बुधिपारद(दृ)श्वा ।
शिष्याम्बुजप्रकरजृंभणचित्रभानुः **कक्कल्ल** एव सुकृती जयति स्थिरायाम् ॥५॥

COLOPHONS :

इति पण्डितपुण्डरीकेण **श्रीक्ककलोप**देशेन **तत्वप्रकाशिकावृत्तिः श्रीदेवसूरिपाद**-पद्मोपजीविना **गुणचन्द्रेण** स्वपरोपकारार्थं श्री**हेमचन्द्रव्याकरणाभिप्रायेण** प्रणायि ।

कस्य धातोस्तिबादीनामेकस्मिन्प्रत्यये स्फुटम्
परस्परविरुद्धानि रूपाणि स्युस्त्रयोदश ॥ १ ॥

× × ×

अव्याधयोऽसमस्तं स्याद् ये येषां चक्रिरे पदम् ।
अक्षेपयस्तथा चान्यदक्षे वयममी वयम् ।। २ ।।

इति श्रीहैमविभ्रमसूत्रम् ।*

## 2278. अनिट्कारिका सटीका

OPENING : अनिट्स्वरान्तो भवतीति दृश्यतामित्यादि ।

[टीका] स्वरान्तो धातुरनिट् भवतीति दृश्यतां अवगम्यतां बोध्यं ज्ञायतां तद्विदो वैयाकरणाः । × × × × एतान् धातून् सेटो वदन्तीति ।। १ ।।

CLOSING : 'पचिं वचिमित्यादि ।

[टीका] डुपचष् पाके । वच परिभाषणे । विचिर पृथग्भावे । × × × × एतान् धातून हसांतान् पूर्वोक्तान् स्वरान् च विद्धि ।। ११ ।।

COLOPHON : इति अनिट्कारिका सम्पूर्णा ।

## 2278 (B) औजढत्साधना

OPENING : सत्ताशुद्धिसमृद्धिवृद्धिशयनस्थानासने भासने,
लज्जाजीवनरोदने च दहने नृत्ये प्रलापे क्रुधि ।
संतुष्टौ रुचिशोकदोषमरणस्पर्द्धाविहारेषु च,
ज्ञेयो धातुरकर्मको भयमदोन्मादप्रमादेषु च ।। १ ।।

अकर्मकधातूनां काव्यमिदम् ।

वहः कृति क्तौ कृतिसम्प्रहारे होढस्तथोर्द्ध्वःष्टुभिनाढिढश्च ।
ऊठौ च निर्डिच्च मधातु भेरडः द्विश्च स्वरादेर्ढज औजढच्च ।। १ ।।

[टीका] भू सत्तायां । विद सत्तायां इत्यादिसत्तार्थवाचकाः अकर्मकाः । × × × × × × अङि परे च वहतेर्धातोः पूर्वस्य ढस्य जो जकारो भवति । अनेन सूत्रेण जः

औजढत्साधना सम्पूर्णा समाप्ता ।

## 2279. अनिट्कारिका सटीका

OPENING : नैकस्वरादनुदात्तात् । ३ आद्योच्चारणेऽनुदात्तादेकस्व[र]धातोः परस्य वसादेरिट् न ।
अनिटस्वरान्तो भवतीति दृश्यतामिमांस्तु सेटः प्रवदन्ति तद्विदः ।
अदन्तमृ्दन्तमृतां[च] वृङ्वृञौ श्विडीङिवर्णेष्वथ शीङ्श्रियावपि ।। १ ।।

**टीका**—अथ सेट अनिटकारिका प्रोच्यते । अनिट्स्वरान्तो यो धातुर्भवति इति दृश्यतां अवगम्यताम् ।

---

*The original Kātantra-Vibhrama-sūtras have been commented upon according to the हैमव्याकरण

CLOSING : दुहि जिघांसायां । द्रोढा । द्रोहिता । द्रुहादीनां विकल्पेन घत्वं । रधादिभ्यश्चेति नेट् । मुह् वैचित्ये । मुग्धा । मोढा । मोहिता इत्यादि सेट् ।

COLOPHON : अनिट्कारिका समाप्ता ।

Post-Colophonic : सं० १७६५ वर्षे पोह वदि १३ दिने बुधिवासरे । लिखतं कुशलविमलमुनिना ।

## 2283. अव्ययार्थादि

OPENING : च पुनरर्थे समुच्चयादिषु च वा विकल्पार्थे औपमार्थे च । ह अह इति द्वौ खेदार्थौ पादपूरणार्थौ च अहह इति खेदे ।

CLOSING : परि सामस्त्ये उपसमीपवाची ।१८। श्रत् श्रद्धायां ।१६। अन्तर् मध्ये ।२०। अन्ये अर्था बृहद्वृत्तिभ्यो ज्ञेया ।

इति प्रादि-अव्ययसंज्ञा ज्ञेया ।

## 2286. उक्तिसङ्ग्रहभाष्यम्

OPENING : वाचा कायेन मनसा श्रुत्वा वाचं विधीयते ।
बालार्थमुक्तिसंस्कारः शास्त्रान्वेषणदर्पणः ।। १ ।।
नमः श्रीदेवभद्रेभ्यो गुरुभ्यश्च निरन्तरम् ।
येषां प्रसादमासाद्य बुधायंते जडा अपि ।। २ ।।

CLOSING : भारतीभूषणमिदं समप्राकृतसंस्कृतम् ।
नित्यं पठन्ति ये तेषामस्तु स्वस्तिनिबन्धनम् ।। १ ।।

COLOPHON : इति **वृत्तित्रयसारोद्धारे पण्डिततिलककविरचितं भाष्यं** समाप्तम् ।

Post-Colophonic : लिखितं भादाकेन ।

## 2289. औक्तिकम्

OPENING : प्रणम्य श्रीजिनं वीरं बालानामुक्तियुक्तये ।
क्रियाकारकसम्बन्धसङ्ग्रहं वच्मि किञ्चन ।। १ ।।

CLOSING : एवमपरेण दक्षिणेनोत्तरेणेत्यादिशेषमपरमप्याकारणकपादपरिसमाप्तेर्विचार्य-प्रयोक्तव्यमिति ।

COLOPHON : पूज्याराध्यभट्टारकप्रभुश्री**सोमप्रभसूरीणां** रचित**मौक्तिकं** समाप्तम् ।

## 2293. कारकतत्त्वम्

OPENING : श्रीगणेशाय नमः ।

साधयति नेह मानं देहविहीनं च येह जगदीशम् ।
सा मयि सेवकभानं प्राप्ते वाग्देवता दयताम् ।। १ ।।

विरोधितातिरोधानक्षमो यस्य गिरां गणः ।
वीरेश्वरं गुरुं शेषवंशोत्तंसं भजामि तम् ।। २ ।।

COLOPHON: इति **शेषचक्रपाणिपण्डित**विरचितं **कारकतत्त्वं** समाप्तम् ।।

Post-Colophonic : संवत् १७८२ पुष्यवदिप्रतिपदि गुरौ लिखितमिदं लक्ष्मणेन ।

## 2296. कारकलक्षणम्

OPENING : ओंकारकाणि कर्त्ता कर्म करणं सम्प्रदानकम् ।
अपादानमाधारः षट् स्युः सम्बन्धस्तु सप्तमः ।। १ ।।
उक्तानुक्ततया द्वेधा कारकाणि भवन्ति षट् ।
उक्तेषु प्रथममेव स्यादनुक्तेषु क्रमादिमाः ।। २ ।।

COLOPHON : इति श्री**मदमरकृतं लक्षणं कारकाणां** षण्णां समाप्तम् ।

## 2301. गणदर्पणः (फोटोकॉपी)

OPENING : (On f. 3)
× × × × काष्ठा दारुणवेशा माता पुत्राद्भुतश्च तयः ।
भृशघोरा नाज्ञातायुतपरमाश्चेति काष्ठादिः ।। ४ ।।

COLOPHON . इति श्री**राजपितामह-श्रीचौलुक्यभूपालकुमारपालदेवेन दण्डवोसरि-प्रतिहार-भोजदेवार्थं** विरचिते **गणदर्प्पणे** तृतीयस्वाध्यायस्य चतुर्थः पादः समाप्तः । शुभं भवतु । ग्रन्थाग्रं । ६०० ।

Post.-Colophonic : शके १३८३ वृषसंवत्सरे पौषवदि १३ भौमे श्रीदेवगिरौ ऊकेशवंशे श्रीदेवडागोत्रे सा० वीरापुत्रेण वीनपाले सं. सोना सं. चांपसीयुवतेन ग्रन्थोऽयं समलेखि । वा० समयभक्तगणीनाम् ।

## 2309. धातुतरङ्गिणी स्वोपज्ञटीकोपेता

OPENING : नमस्कृत्य महोऽनन्तं नित्यं सत्यं चिदात्मकम् ।
**स्वोपज्ञधातुपाठस्य** क्रियते **पञ्जिका** मया ।। १ ।।
श्रीसर्वज्ञं जिनं नत्वा स्मृत्वा सारस्वतं महः ।
**सारस्वते धातुपाठं** वक्ष्ये संक्षेपतः स्फुटम् ।। २ ।।

CLOSING : श्री**मन्नागपुरीयाह्वतपो**······कजारुणाः ।
श्री**चन्द्रकीर्ति**सूरीन्द्राश्चन्द्रवच्छुभ्रकीर्त्तयः ।। १३ ।।
तच्छिष्या **हर्षकीर्त्याह्वाः** सूरयो व्यदधुः स्फुटम् ।
**धातुपाठमिमं** रम्यं **सारस्वतमतानुगम्** ।। १४ ।।
**खण्डेलवाल**सद्वंशे **हेमसिंहा**भिधः सुधीः ।
तस्याभ्यर्थनया ह्येष निर्मितो नन्दताच्चिरम् ।। १५ ।।

Ct.-CLOSING :

गच्छे यत्र पवित्रितावनितले **हम्मीरदेवार्चितः** ,
सूरिः श्री**जयशेखरः** सुचरितश्रीशेखरः सद्गुणः ।
......दां पुरि **सीहडस्य** वचनादल्लावदीभूभुजा ,
सद्वासःपुरमान-दानमहितः श्री**वज्रसेनो गुरुः** ॥ १ ॥

शुद्धबोधजलागाधामिमां **धातुतरङ्गिणीम्** ।
अवगाह्य सुधीः सम्यक् कुर्वतां निर्मलां मतिम् ॥ ७ ॥

COLOPHON : श्री**मन्नागपुरीयतपागच्छाधिपभट्टारकहर्षकीर्तिसूरि**विरचितं **स्वोपज्ञधातुपाठविवरणं** सम्पूर्णं । समाप्ता चेयं **धातुतरङ्गिणी**नाम्नी **धातुपाठटीका** ।

Post-Colophonic : संवत् १६५५ वर्षे कार्तिकशुदिपूर्णिमासीतिथौ लिखिता श्रीमन्नागपुरे एषा टीका ।

## 2316. प्रबोधचन्द्रिका

OPENING :

श्रीगणेशाय नमः ।

हरिहरगुरुभक्तः सर्वलोकानुरक्तः त्रिभुवनगतकीर्त्तिः कान्तकन्दर्पमूर्त्तिः ।
रणरिपुगणकालो वैजलः क्षोणिपालो जयति जयति दाता सर्वकर्मविधाता ॥१॥

चन्द्रावती वदनचन्द्रचकोरविक्र**मादित्यदेवतनयो** नयतन्त्रवेत्ता ।
**चौहानवंशतिलकः पटनाधिनाथो** राजा परं जयति **वैजलदेव**नामा ॥ २ ॥

CLOSING :

**प्रबोधचन्द्रिकायां** च कृतौ **वैजलभूपतेः** ।
एषा विशेषतः सुष्ठु समाप्ता सन्धिचन्द्रिका ।

COLOPHON : इति श्री**वैजलभूपतिकृता प्रबोधचन्दिका** बालावबोधिनी समाप्ता ।

समर्पितोऽयंगोपालकृष्णपादारविन्दयोः ।
प्रबोधचन्द्रिकालेखश्रमः सोयं सतां मुदे ॥ १ ॥

Post.-Colophon : संवत् १८५२ का शाके शालिवाहनि उत्तममासे जेष्टमासे कृष्णपक्षे तिथौ ७ सोमवार नै लीखी लिप्यकृतं महात्मा रतनचंद ।

## 2320. वाक्यप्रकाशः सटीक

OPENING (On f. 2)

तैः स्थीयते सुखं यैर्न भूयते रागरोषरतचित्तैः ।
उक्तिप्रयोग एवं क्रमेण कर्त्तप्यिभावेषु ॥ ८ ॥

तैः स्थीय० । अत्र पूर्वार्द्धे भावोक्तौ दृष्टान्तद्वयं एवं कर्त्तरि कर्मणि भावे चेति त्रियोक्तिः ॥ ८ ॥

CLOSING :

गुरुतपगणगगनांगणतरणिश्री**रत्नसिंहसूरी**णाम् ।
शिष्यागुनेदमौक्तिकमुदितमुदयधर्मसंज्ञेन ॥ १२३ ॥

मुनिगगनशरेन्दु १५०७ मिते वर्षे हर्षेण सिद्धपुरनगरे ।
प्राथमिकस्मृतिहेतोर्विहितो **वाक्यप्रकाशो**ऽयम् ॥ १२४ ॥

COLOPHONS :

इति **वाक्यप्रकाशाभिधं उक्तिकं** समाप्तम् । सम्पूर्णं ग्रन्थाग्रं. ६०० श्लोक-संख्या । मुनिवर्द्धमानलिखितम् । सं० १६६३ माह सुदि ११

इति **वाक्यप्रकाशाभिधस्य उक्तिटीका:** समाप्तिः । × × × × **तपागच्छा**धिपति श्री**हेमविमल**सूरीश्वरशिष्येण **हर्षकुलपण्डितेन** कृतम् । श्रीरस्तु । संवत् १६६३ वर्षे माह सुदि ११ बुधवारे । राडवरमध्ये लिखितम् ।

## 2321· वासनाविवरणम्

OPENING :

योगसम्बन्धमिच्छता छात्रेणावश्यमेवेति निश्चयेन निर्णयतो ज्ञातव्यमिति यावत् कतमत् तत्राह-षट्कारकाणि सम्बन्ध उक्तानुक्ततया द्विधा ।

COLOPHON :

इति श्री**भीष्म**विरचिते **वासनाविवरणं** समाप्तम् ।

## 2332· संस्कृत-प्राकृतोक्तिसमासः

OPENING :

महोपाध्यायश्रीराजविमलगणिगुरुभ्यो नमः ।

कर्त्ता १ कर्म्म २ करण ३ सम्प्रदान ४ अपादान ५ सम्बन्ध ६ अधिकरणकारक ७ सातमउ सम्बन्धः ।

CLOSING :

आधारो यस्त्रिलोका (क्या) जलधिजलधरा केदुवो यज्ञोज्या ,
भुज्यन्ते यत्प्रसादादसुरसुरनराधीश्वरे सम्पदस्ताः ।
आदेशायशस्य (द्यस्य) चिन्तामणिसुरसुरुभे (रभी) कल्पवृक्षादयस्ते ,
श्रीमान् जैनेन्द्रधर्मकिसलयन स वः शाश्वती शर्मलक्ष्मी ।।

COLOPHONS :

इति श्रीसंस्कृतप्राकृत उक्तिसमास समाप्तः ।

Post.-Colophonic :

लक्ष्मीविजयेन लखीतं ईदं शास्त्रम् ।

## 2338· प्राकृतकामधेनुः

OPENING :

श्री गणेशाय नमः ।

ब्रह्माणमादौ शिरसा पितामहं नमामि तां मातुरमादिविद्याम् ।
**श्रीरावणेन** नवबुद्धिशालिना विधीयते **प्राकृतकामधेनुः** ।। १ ।।

विस्तराद् गदितं पूर्वं संक्षेपादधुनोच्यते ।
बालबोधकरं सूत्रं दध्नो यादृग् नवोद्धृतम् ।। २ ।।

देवरुत्या प्रतीतानां तद्भावजा निगद्यते ।
लक्षणं नेह यत् सिद्धं तत्समं देशजं च तत् ।। ३ ।।

COLOPHON :

इति श्रीविद्याभक्त-**श्रीरावण**कृत**कामधेनुः** समाप्ताः ।

## 2347. अनेकार्थसङ्ग्रहकैरवाकरकौमुदीटीका

OPENING :

अर्हम् ।

परमात्मानमानम्य **निजानेकार्थसङ्ग्रहे ।**
वक्ष्ये **टीकामनेकार्थकैरवाकरकौमुदीम्** ।। १ ।।

× × ×

व्युत्पत्तिलिङ्गनिर्णीतिविषमार्थप्रकाशनम् ।
प्रायेण दृष्टदृष्टान्तो वाच्यमत्र चतुष्टयम् ।। ८ ।।

CLOSING : & COLOPHON :

इत्या**चार्यश्रीहेम**चन्द्रविरचिताया**मनेकार्थकैरवाकरकौ**मुदीत्यभिधानायां **स्वोपज्ञानेकार्थसङ्ग्रहटीकायां** अनेकार्थशेषाव्ययकाण्ड: सप्तम: ।

**श्रीहेमसूरि**शिष्येण श्रीमन्**महेन्द्रसूरिणा** ।
भक्तिनिष्ठेन टीकेयं तन्नाम्नैव प्रतिष्ठिता ।। १ ।।

× × ×

परिपूर्णा चेय**मनेकार्थसङ्ग्रहटीकानेकार्थकैरवाकरकौमु**दीत्यभिधानेति ।

Post-Colophonic :

सुदृढश्रेयोमूल: परार्द्ध्यशाखाप्रपञ्चरोचिष्णु: ।
वंशोऽस्ति धर्क्कटानां फलभृदपि न नश्वरप्रकृति: ।। १ ।।

तत्रासीत् पार्श्वनागाख्य: श्राद्ध: श्रद्धालुतानिधि: ।
तस्याङ्गज: सतां मुख्यागोल्व: प्रोल्लासिकीर्त्तिभाक् ।। २ ।।

× × ×

अभिधानकोशमेतदनेकार्थं लिलेख भो: ।
दृष्टिवसुसूरसंख्ये विक्रमभूपवत्सरे ।। १६ ।।

सुलेखकोऽत्र लावण्यसिंहनामा प्रसिद्धिभाक् ।
सदक्षरविनिर्माता ब्राह्मणोऽयं प्रकीर्तित: ।। १७ ।।

## 2382 एकाक्षरनाममाला सटीका

OPENING :

अथ एकाक्षरीनांममाला लिख्यते—

विश्वाभिधानकोषानि प्रविलोक्य प्रभाष्यते ।
**अमरेण कवीन्द्रेणैकाक्षरनाममालिका** ।। १ ।।

**अर्थ**—अमरकवि एकाक्षरनाममाला कहै छै समस्त नाममाला देखिनै ।। १ ।।

सा लक्ष्मी हो निपाते च हस्ते दारुणि शूलिनि ।

CLOSING :

क्ष: क्षेत्रे रक्षसीत्युक्ता माला प्राक्सूरिसम्मता ।
नाम्नामेकार्थनानार्थैकाक्षराणामियं मया ।। २० ।।

**अर्थ**—सा: लक्ष्मीनें ह: निपाति नें कहियें हाथनैं महाष्टकें माहादेव नें, क्ष: खेतनैं राक्षस नें कहियैं । एकार्थ नानार्थ इसा जे एकाक्षरी नांम तेहनी माला मे कही । परिण केहवी छे पूर्वाचार्यें मांनी छे ।

COLOPHON : इति एकाक्षरनांममाला समाप्ता । तत्समाप्तौ समाप्तः ।

Post-Colophonic : संवत् १८८३ ना वरषे ज्येष्टसुद १५ शनौ वासरे संपूर्ण लिखितं चेला रंगजी स्ववांचनार्थ । श्रीकच्छदेशे श्रीमां(न)कूआग्रामे श्रीसुपार्श्वजिनप्रसादात् ॥

## 2386. एकाक्षरनाममाला

OPENING : श्रीभाषायै नमः ।

धा(ध्या)त्वा नत्वा निरीक्ष्यान्तःकरणे कर्मसाक्षिणम् ।
क्रियते नूतना **नाममालैकाक्षर**वाचिका ॥ १ ॥
यतयो ये परं पारं शब्दाम्भोधेर्गता मता ।
एषा तेषामतो मान्या महाभावमनीषिणाम् ॥ २ ॥

COLOPHON : इति श्री**विश्वशम्भु**प्रणीता **एकाक्षरीनाममालिका** ।

Post-Colophonic: लिखिता विद्याविलासेन सोल्लासेन । श्रीयोधपुरे पुरि ।

## 2387. एकाक्षरनाममाला

OPENING : ओं नमः ।

अथ एकाक्षरीनांममाला लिख्यते –

नत्वा शङ्करपादपद्मयुगलं ज्ञानाय हेतोः सखे ,
नानाग्रन्थविलोकिता पुनरहन्(म्) ज्ञात्वा मया लिख्यते ।

COLOPHON : श्री**दामोदर**जागरूकवसुधां तस्यात्मनो **व्यासराट्** ,
तेनायं वितनोदभूत सु[क]वये श्री**कालिदासा**भिधः ॥ १ ॥

CLOSING : **प्रल्हादपुर**सम्भूतो **दामोदरो**ऽभवत् पुरा ।
ग्रन्थकर्त्ताभवत्तस्मात् **कालिदासा**भिधः कविः ॥ २ ॥

COLOPHON : इत्येकाक्षरीनांममाला सम्पूर्णा ।

## 2390. गाथाकोशः

OPENING : ओं नमो जिनाय । सरस्वत्यै नमः ।

एसु वयणो रोसारुणपडिमासंकंतगोरिमुहयंदं ।
गहियग्घ पंकयं पिवं संझासलिलंजलिं णमह ॥ १ ॥
उत्प्रेक्षानामालङ्कारः ।
**सत्तसयाइं** कइ वत्सलेण कोडीए मज्झयाराओ ।
**हालेण** विरहयाणं **सालंकाराण गाहाण** ॥ २ ॥

CLOSING : विझारु हणा लावं मा पल्ली कुणउ गामिणी ससइ ।
पच्चुजीवो जइ कहवि सुणइ वा जीवियं मुयइ ।

## 2401. शारदीयनाममाला

OPENING

श्रीसरस्वत्यै नमः ।

प्रणम्य परमात्मानं सच्चिदानन्दमीश्वरम् ।
गृह्णाम्यहं नाममालां मालामिव मनोरमाम् ।। १ ।।

CLOSING :

श्रीमन्नागपुरीयकाह्वयतपागच्छाधिपाः सज्जपा ,
सूरिश्रीप्रभुचन्द्रकीर्तिगुरवस्तेषां पदानुग्रहाः(त्) ।
भूपाभिज्ञजनोचितां लघुतरां श्रीनाममालामिमां ,
चक्रे श्रीगुरुहर्षकीर्तिरलिखत्······वरग्रामणी ।। ३२ ।।

भूद्वीपसरदद्रिनभा······पातालदिक्ज्वलनवायुवनानि यावत् ।
यावन्मुदः विरततो भुवि पुष्पदन्तौ तावत् स्थिरा विजयतां बत नाममाला ।।३३।।

COLOPHON: इति श्रीहर्षकीर्तिसूरीश्वरविरचितायां लघुनाममालायां तृतीयकाण्डः सम्पूर्णम् ।

Post-Colophonic : लिखत्वं ऋ मनरूप स्वात्मार्थं सं० १८९४ शाके १७६० प्रवर्त्तमां मगसरवद २ भोमवासरे सुरगढनयरे मंद्यारीयादेसे ।

## 2407. कविकर्पटिका

OPENING :

श्रीगणेशाय नमः ।

यः कातन्वसुधानिधानकलशः साहित्यरत्नालयः ,
सानन्दस्फुटगद्यपद्यवचनप्रागल्भशब्दोदयः ।
षट्काव्यामृतपूरपूर्णवदनः सद्वृन्दचन्द्रोदय-
स्तस्येयं कविकर्पटीकरचना कष्टं प्रतिष्ठाप्यताम् ।। १ ।।

यत्नादिमां कण्ठगतां विपश्चितो श्रुतोपदेशात् विदितोपदेशः ।
अजातशब्दार्थविनिश्चयोपि श्लोकं करोत्येव सभासु शीघ्रम् ।। २ ।।

COLOPHON : इति श्रीकविराजशङ्खधरविरचिता कविकर्पटीकरचना सम्पूर्णतामगमत् ।

## 2408. गाथालक्षणं सटीकम्

OPENING:

नमिऊण चलणजुअलं नेमिजिणिंदस्स भावओ पयओ ।
गाहालक्खणमेयं वुच्छामि गुरुवएसेण ।। १ ।।

अस्य व्याख्या—कवीनां स्थितिरियं कवयः शास्त्रारंभे आशीर्नमस्क्रियावस्तुनिर्देशो-(शं) कुर्वन्ति । अतः प्राह—नेमिजिनेन्द्रस्य चरणयुगलं नत्वा अहं गुरूपदेशेन एतद् गाथालक्षणं वक्ष्यामि । किंवि० अहं भावतः प्रयतः सादरः ।। १ ।।

CLOSING:

इक्क सलूणा सामलित्तु अधण जे सम्मुहयथिय ।
जेहिं नवंकइ वयणं नग्गंतेहिं नहेहिं किय ।। ८८ ।।

पञ्चमश्चक्री षोडशो जिन: शाशान्तिरितिगम्यम् । × × × × × अनेन तस्य रवेरपि सेव्यत्वमुक्तम् ।। ६३ ।।

प्रस्तारो यथा ।

## 2409. छन्दःकोशः

OPENING: आजोयणद्वियाणं सुरनरतिरियाणहरिससंजणणी ।
सरससरवन्नछंदा सुमहत्था जयउ जिणवाणी ।। १ ।।

CLOSING: **सूरीहि रयणसेहर**नामेहिं सुद्धसीसबोहट्ठा ।
विहिओ एसो गंथो पढिज्जमाणो सुहं देउ ।। १०५ ।।

COLOPHON: इति श्रीम**न्नागपुरीयतपागच्छा**धिराजभट्टारकश्री**रत्नशेखरसूरि**कृतश्**छन्दःकोशः** संपूर्णः

## 2422. वृत्तरत्नाकरः सटिप्पणः

OPENING: सुखसन्तानसिद्ध्यर्थं नत्वा ब्रह्माच्युतार्चितम् ।
गौरीविनायकोपेतं शङ्करं लोकशङ्करम् ।। १ ।।
वेदार्थशैवशास्त्रज्ञः **पव्वेको**ऽभूद् द्विजोत्तमः ।
तस्य पुत्रोस्ति **केदारः** शिवपादार्चने रतः ।। २ ।।
तेनेदं क्रियते छन्दोलक्षलक्षणसंयुतम् ।
**वृत्तरत्नाकरं** नाम बालानां सुखबुद्धये ।। ३ ।।
× × ×
षडध्यायनिवद्धस्य छन्दसोऽस्य परिस्फुटम् ।
प्रमाणमपि विज्ञेयं षट्त्रिंशदधिकं शतम् ।। ५ ।।

CLOSING: वंशेऽभूत् **कश्यपस्य** प्रकटगुणगणः शैवसिद्धान्तवेत्ता ,
विप्रः **पव्वेक**नामा विमलतरमतिर्वेदतत्त्वावबोधे ।
**केदार**स्तस्य सूनुः शिवचरणयुगाराधनैकाग्रचित्तः
छन्दस्तेनाभिरामं प्रविरचितमिदं **वृत्तरत्नाकराख्यम्** ।। १ ।।

COLOPHON: इति **भट्टकेदार**विरचिते **वृत्तरत्नाकराख्ये** छन्दसि षष्ठोऽध्यायः समाप्तः । सम्पूर्णमिद छन्दोलक्षणम् ।

## 2423. वृत्तरत्नाकरः सुगमाटीकासहितः

OPENING: श्रीपार्श्वनाथं जिनं नत्वा **गणिः समयसुन्दरः** ।
**वृतारत्नाकरच्छन्दोव्याख्यानं** कुरुते स्फुटम् ।। १ ।।

CLOSING: **वृत्तारत्नाकरे वृत्ति गणिः समयसुन्दरः** ।
षष्ठाध्यायसंबद्धां पूर्णां चक्रे प्रयत्नतः ।। १ ।।

COLOPHONS : इति श्री**वृत्तरत्नाकराख्ये** छन्दसि श्री**समयसुन्दरोपाध्याय**विरचिता **वृत्तरत्नाकर-सुगमवृत्तौ** षष्ठोऽध्याय: सम्पूर्ण ।

## 2425. वृत्तरत्नाकरः सुगमाटीकासहितः

OPENING : As at no. 2423

CLOSING :

संवति विधिमुखनिधिरसशशिसंख्ये दीपपर्वदिवसे च ।
**जालोरनामनगरे लूणिया फसला**र्पितस्थाने ॥ २ ॥

श्रीमत्**खरतरे गच्छे श्रीजिनचन्द्रसूरयः** ।
तेषां **सकलचन्द्राख्यो** विनेयः प्रथमोऽभवत् ॥ ३ ॥

तच्छिष्य**समयसुन्दर** एतां **वृत्तिं** चकार सुगमतराम् ।
**श्रीजिनसागरसूरि**प्रवरे गच्छाधिराजेऽस्मिन् ॥ ४ ॥

यः कोपि मत्सरी मूढः प्रशस्तिं न लिखिष्यति ।
स लोके लप्स्यते निन्दां कुणिर्भावी परत्र च ॥

COLOPHON : इति **वृत्तरत्नाकराख्ये** छन्दसि **श्रीसमयसुन्दरोपाध्याय**विरचितायां **वृत्तरत्नाकर-सुगमवृत्तौ** षष्ठाध्यायः । सम्पूर्णः ग्रन्थाग्रं. १२००

Post-Colophonic : संवत् १६९६ वर्षे चैत्र सुदि १० रवौ लिखितमिदं पुस्तकम् ।

## 2427. वृत्तरत्नाकरः सटीकः

OPENING :

यत्पादाग्रनखांशुराजिररुणानम्रालिके राजते
तत्कालागतसम्पदः पदततिः सद्याचकं कोकिलः ।
तं नत्वा **जयमङ्गलै**कवसतिं संकल्पकल्पद्रुमं,
श्रीमत्पार्श्वजिनेश्वरं मदगजं मोहांह्रियोन्मूलने ॥ १ ॥

गुरोः प्रसादादधिगम्य **वृत्तरत्नाकर**च्छन्दस उद्यमेन ।
सारं मया किञ्चिदथास्य **वृत्ति**र्विधीयते मुग्धसुबोधहेतोः ॥ २ ॥

CLOSING & COLOPHON :

**वादिश्रीदेवसूरेर्ग**णगगनविधोर्बिभ्रतः शारदाया
नाम प्रत्यक्षपूर्वं सुजयपदभृता (तो) **मङ्गलाह्वस्य** सूरेः ।
पादद्वन्द्वारविन्दे बुधमधुपहिते भृङ्गभङ्गिं दधानां
**वृत्तिं सोमो**ऽभिरामामकृत कृतिमतां **वृत्तरत्नाकरस्य** ॥ १ ॥

× × × ×

श्रीविक्रमनृपकाले नन्दकरकूपीटयोनिशशिसंख्ये ।
समजनि रजोत्सवदिने **वृत्तिरियं मुग्धबोधकरी** ॥ ४ ॥

सर्वाग्रं ग्रन्थाङ्के रुद्रमितशतानि नवतियुक्तानि ।
अत्रानुष्ठुब्गणनायोगाज्जातानि किञ्चिदधिकानि ॥ ५ ॥

सम्पूर्णा चेयं **पण्डितसोमचन्द्रकृता वृत्तरत्नाकरछन्दोवृत्तिः** ससूत्रा समाप्तः ।

## 2432. श्रुतबोधः

OPENING

छन्दसां लक्षणं येन श्रुतमात्रेण बुद्धचते ।
तदहं रचयिष्यामि श्रुतबोधमविस्तरम् ।। १ ।।

CLOSING :

विमलकमलचारुचंञ्चत्कटाक्षाक्षिविक्षेपनिक्षेपलुभ्यत्प्रकामाभिरामाभिकरच्छ-सन्मानसे ।

भवति यदि हि वर्णषट्कं तथाद्यलघुप्रोभवेद्दण्डकाख्यं पुनर्यत्र नो युग्ममन्ते गणो राजिरा ।

रसनयनमिताक्षराद्रूर्ध्वमानो निधिव्यालखेटोन्मितैरक्षरैर्ग्रथ्यमानो भवेदन्त्यग-स्त्वादिगः ।

स्फुटमिह यतिरीशसूनोर्मुखैराग्निभिः स्मारसौवर्णकुम्भाभवक्षोजपीठेऽलुठत्तारहारेऽनिशम् ।। १ ।।

COLOPHON : इति **श्रीकालिदासकृतश्रुतबोधः** ।

Post-Colophonic पं० कुंअरकुशलग । लिखितम्

## 2437. श्रुतबोधो मनोरमाटीकासहितः

OPENING :

श्रीगणेशाय नमः ।

वन्दे विश्वेश्वरं देवं वा[च]स्पतिमुखान् गुरून् ।
मातरं पितरं नत्वा निर्विघ्नेप्सितसिद्धये ।। १ ।।

नत्वा भवानीचरणारविन्दं **मनोहरेण** क्रियते विचार्य ।
**माणिक्यमल्लक्षितिपालतुष्टचै सुबोधनीयं श्रुतबोधटीका** ।।२।।

COLOPHON : इति श्रीसमस्तनृपतिशिरोमणिरञ्जितपादपीठ**माणिक्यमल्ल**कारिता श्री**मनोहरशर्म**कृता **श्रुतबोधटीका सुबोधिनी** सम्पूर्णा ।

## 2439. श्रुतबोधः सटीकः

OPENING :

श्रीगणेशाय नमः ।

शुभजननसमर्थावादिनाथस्य पादावसुरसुरमनुष्यैर्भूरिवन्द्यौ हि नत्वा ।
ललितपदसुरम्यां **शास्त्रबोधस्य टीकां** मुनिरहमिह कुर्वे **हंसराजो** विचित्राम् ।। १ ।।

सुगुरुवचनदीपैर्दर्शितं तत्त्वरूपं मम हृदयगुहान्तेनुग्रहाद्यत्तदेव ।
भृशमहमभिधास्ये बालबोधिप्रसन्नं निजपठननिमित्तं बालबोधाय चैव ।। २ ।।

COLOPHON इति श्री**कविकालिदास**विरचितं **श्रुतबोधस्य** टीकां सम्पूर्णं समाप्तम् ।

## 2442. अप्पयदीक्षितवृत्तिवार्तिकम्

OPENING :

श्रीगणेशाय नमः । श्रीगोपीजनवल्लभाय नमः ।

विश्वं प्रकाशयन्ति व्यापारैर्लक्षणाभिधध्वननैः ।
नयनैरिव हरिमूर्त्तिर्विबुधोपास्या सरस्वती जयति ।। १ ।।

वृत्तयः काव्यसरणावलङ्कारप्रबुद्धिभिः।
अभिधा लक्षणा व्यक्तिरिति तिस्रो निरूपिताः ।। २ ।।
तत्र क्वचिद् वृद्धै-विशेषा न स्फुटीकृतान्।
नि(शि)ष्टं कथितुमस्माभिः क्रियते **वृत्तिवार्तिकम्** ।। ३ ।।

COLOPHON: इति **अप्पयदीक्षितवृत्तिवार्तिकम्**।

Post-Colophonic: संवत् १६१० वर्षे मार्गशीर्षशुक्लपक्षे तिथौ पंचम्यां चन्द्रवासरे ब्राह्मणज्ञातीय साचोराशास्त्रि उपनामक धीरजरामपुत्रआनंदरामेण अस्मिन् देवपत्ताने लिखितं स्वपठनार्थम्।

## 2443. उज्ज्वलनीलमणिः

OPENING: श्रीगणेशाय नमः। श्रीगोपीनाथाय नमः।

ओंनामा कृष्णरसज्ञः शीलेनोद्दीपयन् सदानन्दम्।
निजरूपोत्सवदायी सनातनात्मप्रभुर्जयति ।। १ ।।
मुख्यरसेषु पुरा यः संक्षेपेणोदितो रहस्यत्वात्।
पृथगेव भक्तिरसराट् सविस्तरेणोच्यते मधुरः ।। २ ।।

CLOSING: अय**मुज्ज्वलनीलमणि**र्गहनमहाघोषसागरप्रभवः।
भजतु तव मकरकुण्डलपरिसरसेवौचितीं देव ।। १ ।।

COLOPHON: सम्पूर्णोऽय**मुज्ज्वलनीलमणिः**।

Post-Colophonic: सं० १६५० पौषशुक्ल १५ लिखितं ब्राह्मण रामनारायण कवीश्वर जयलालजी वाचनार्थं। उज्ज्वलनीलमणिः ग्रन्थः।

## 2444. कविरहस्यम् (अपशब्दभाषाकाव्यम्) सावचूरि

OPENING: श्रीवीतरागाय नमः।

जयन्ति भुरजित्पादनखदीधितिदीपिकाः।
मोहान्धकारविध्वंसान्मुक्तिमार्गप्रकाशिकाः ।। १ ।।

कविः स्वकाव्यादौ इष्टदेवतां नमस्करोति, तन्नमस्कारात् पुण्यप्राग्भारो भवति, तस्माच्च विघ्नविनाशः स्यात्। तं विघ्नं विनाशं मन्यमानो **हलायुध** आह-

काव्यं **हलायुध**कृतं कविगुह्यनाम ख्यातेह तस्य **रविधर्म**कृतास्ति टीका।
अभ्यस्यतां यदि वदन्ति बुधा विवादे स्पष्टैः क्रियान्तरपदैर्विजयं लभन्ते ।। ६७ ।।

**अपशब्दभासाख्ये काव्ये टीका** शतानि दश विहिता[नि]।
श्लोकानामधिकानि कविना **रविधर्मसंज्ञेन** ।। ६८ ।।

Post-Colophonic: संवत् १५६३ वर्षे पौषमासे कृष्णपक्षे सप्तम्यां तिथौ श्री श्री श्री श्री श्री श्री पुण्यप्रभसूरिविनेयेन **मुनिभावरत्नेन अपशब्दभासाख्य**काव्यमलेखि।

## 2451. काव्यप्रकाशः सटीकः

OPENING :

श्रीगणेशाय नमः ।

मुखैश्चतुर्भिः स्तुवते विधात्रे स्तोत्रे श्रुतीनां च चतुष्टयाय ।
भुजैश्चतुर्भिश्चतुरोर्थवर्गान् नमो ददानाय चतुर्भुजाय ॥ २ ॥

× × ×

मम्मटभट्टस्तु ताः कारिकाः सोदाहरणं व्याख्यातुं कारिकाग्रन्थादिभूतां नियतिकृतेत्यादिकारिकां व्याख्यातुमुपस्थापयति । ग्रन्थारम्भ इत्यादि ।

CLOSING :

इतिहासादीनामित्यत्रादिपदान्नाटचाङ्गपरिग्रहः । निपुणतापदार्थमाह-व्युत्पत्तिः संस्कारः स चावेक्षणीयार्थविषयः ।

## 2452. काव्यप्रकाशसङ्केतः

OPENING :

स्वस्तिश्रीमन्महागणाधीशाय नमः ।

अपरतन्त्रामित्युक्ते यथा परिमाण्वादिपारतन्त्र्यनिरासस्तथा कविपारतंत्र्यनिरासोऽपि भारत्याः स्यादित्यन्यशब्दोपादानम् । कवेरन्यस्य परमाण्वादेरधीना न भवति कवेस्त्वधीनैवेत्यर्थः ।

CLOSING & COLOPHON :

इति **काव्यप्रकाशसङ्केते** दशम उल्लासः । १० ॥ समाप्तश्चायं **काव्यप्रकाशसङ्केतः** कृती **राजानकमम्मटालकरुचकानाम्** ।

## 2453. काव्यालङ्कारः (शृङ्गारहारः)

OPENING :

श्रीगणेशाय नमः ।

विघ्नेशं विघ्नहन्तारं सर्वकामफलप्रदम् ।
करुणाकोमलं कान्तं वन्दे देवं गजाननम् ॥ १ ॥
पौत्रः **श्रीवसुदेवस्य केस(श)वस्याङ्ग**सम्भवः ।
ग्रन्थं **शृङ्गारहाराख्यं बलदेवः** करोम्यहम् ॥ २ ॥

COLOPHON :

इति श्री**बलदेव**विरचिते **काव्यालङ्कारे शृङ्गारहारे** तृतीयो विभागः ।

Post-Colophonic :

लिखितमिदं उदयकुशलेन ।

## 2456. चन्द्रालोकः

OPENING :

श्रीभवान्यै नमः । अविघ्नमस्तु ।

उच्चैरस्यति मन्दतामरसतां जाग्रत्कलङ्कैरव-
ध्वंसं हस्तयते च या सुमनसामुल्लासिनी मानसे ।
दुष्टोद्यन्मदनाशनार्चिरमला लोकत्रयीदर्शिका,
सा नेत्रत्रितयीव खण्डपरशोर्वाग्देवता दीव्यतु ॥ १ ॥

हंहो चिन्मयचित्तचन्द्रमणयस्संवर्द्धयध्वं रसान् ,
रे रे स्वैरिणि निर्विचारकविते मास्मत्प्रकाशीभव ।
उल्लासीयविचारवीचिनिचयालंकारवारांनिधे-
श्चन्द्रालोकमयं स्वयं वितनुते **पीयूषवर्षः कृती** ।। २ ।।

CLOSING : **पीयूषवर्षप्रभवं चन्द्रालोक** मनोहरम् ।
सुधानिधानमासाद्य श्रयध्वं विबुधा मुदम् ।। ५ ।।
जयन्ति याज्ञिकश्रीमन्**महादेवा**ङ्गजन्मनः ।
सूक्त**पीयूषवर्षस्य जयदेव**कवेर्गिरः ।। ६ ।।

**महादेवः** सत्रप्रमुखमखविद्यैकचतुरः सुमित्रा तद्भक्तिप्रणिहितमतिर्यस्य पितरौ ।
प्रणीतस्तेनासौ सुकवि**जयदेवेन** दृ(द)शभिश्चिरं **चन्द्रालोकं**(को) रचयतु मयूखैर्दश दिशः ।। ७ ।।

COLOPHON : इति श्री**पीयूषवर्ष**पण्डितश्रीजयदेवविरचिते **चन्द्रालोका**लङ्कारे अभिधास्वरूपाभिधानोत्तमो दशमो मयूखः ।

## 2457. चन्द्रालोकः

OPENING : श्रीगणेशाय नमः ।

उपमा यत्र सादृश्यं लक्ष्मीरुल्लसति द्वयोः ।
हंसीव कृष्ण ते कीर्तिः स्वर्गङ्गामवगाहते ।। १ ।।

CLOSING : शृङ्गारहास्यकरुणारौद्रवीरभयानकाः ।
जुगुप्साद्भुतसंज्ञं चेत्यष्टौ नाट्ये रसा [ : ] स्मृताः ।। १७३ ।।

COLOPHON : इति श्रीअलङ्कारग्रन्थ **चन्द्रावलोक** सम्पूर्णम् ।

Post-Colophonic : संवत् १६२४ का फाल्गुनमासे कृष्णपक्षे तिथौ १० मंगलवाश्रान् युतायां लिखितं कवेश्वर चिरू जयलालेन । कृष्णगढमध्ये । स्वाध्ययनाय ।

## 2458. चन्द्रालोकः सटीकः

OPENING : ओं स्वस्ति श्रीगणेशाय नमः ।

पृथ्वीं पृथ्वी न पद्भ्यां न च वहति नभस्तुंगतामुत्तमांगात् ,
पाणिप्रक्षेपयोग्यं दधति दश दिशः किञ्च नैवावकाशम् ।
कुर्यां किं वा न कुर्यां त्रिपुरविजयिनस्ताण्डवे चिन्तयेत्थं,
व्यग्रः सर्गादिहेतुस्त्रिदशगणनुतः श्रेयसे भैरवोऽस्तु ।। १ ।।

× × ×

देवपतेरिव शक्तिर्यस्य जये भूभृतां प्रथिता ।
श्री**वीरसिंह**देवस्तत्र धरामण्डले जातः ।। ४ ।।

दशरथतो रघुपतिरिव तस्मादिह **वीरभानुभूपाल:** ।
आबद्धधर्मसेतुर्जगति समुद्रे समुद्भूतः ।। ५ ।।

तत्तनयो नयनिर्मलकीर्त्तिः स्वर्निमग्ना कमलम् ।
**श्रीरामचन्द्रदेवो** दूषणहन्ता समुल्लसति ।। ६ ।।

श्री**वीरभद्रदेवो** वैरिवधूगीतसत्कीर्त्तिः ।
जयति तदीयस्तनयः कविगोष्ठीदैवतारामः ।। ७ ।।

क्रियते तस्य निदेशा**च्चन्द्रालोकप्रकाशो**ऽयम् ।
**शारदागम** इति विदितो **भट्टाचार्येण** यत्नेन ।। ८ ।।

CLOSING :

श्री**वीरभद्रदेवेन** भूदेवामरशाखिना ।
**यशोवागर्भरत्नेन** यत्नेनेदं विनिर्मितम् ।।

लक्ष्मीर्वक्षसि कौस्तुभप्रणयिनो यावत्तथार्द्धगता-
मङ्गीकृत्य पुरद्विषो गिरिसुता स्थेमानमालम्बते ।
यावद्देवगिरः पुराणविधयस्तावद्भुवो मण्डले
**चन्द्रालोक**विकाशमेष कुरुतां ग्रन्थोऽभिरामोदयः ।।

श्री**वीरभद्रचन्द्र**भूपतिलब्धिनिदेशेन यत्नेन ।
**चन्द्रालोकमयूखो** दशमः स्पष्टार्थतां नीतः ।।

COLOPHON : इति श्रीमहाराजाधिराजश्री**रामचन्द्रदेवा**त्मज **युवराजश्रीवीरभद्रदेवादिष्टमिश्र-बलभद्रा**त्मजसकलशास्त्रारविन्द**प्रद्योतनभट्टाचार्य**विरचिते **चन्द्रालोकप्रकाशे शारदागमे** दशमो मयूखः समाप्तः ।। १० ।।

Post-Colophonic : श्रीमहाराजाधिराजश्रीमत्पूज्याचार्यसिंहराजतत्पदविराजमान श्रीमहाराजाधिराज-श्रीमत्पूज्याचार्यरामचन्द्रतच्छिष्यतुलार्षिनाम्ना लिखितैषा समूला स्वपठनार्थहेतवे । संवत् १९०१ मि० मा० शु० ९ ।

## 2459. चन्द्रालोक: सटीक:

OPENING:

श्रीगणेशाय नमः ।

उपमानोपमेयत्वं यदेकस्यैव वस्तुनः ।
इन्दुरिन्दुरिव श्रीमानित्यादौ तदनन्वयः ।। १ ।।

COLOPHON : **महादेवभट्टेन आकूतरचिता टीका** समाप्तोऽयं चन्द्रालोकः ।

Post-Colophonic: संवति १७४८ शाके श्रीमन्मूलत्राणनगरे लिखितेयं वृत्तिः स्वहेतवे परेषां च पठनाय ।

## 2460 रसतरङ्गिणी नूतनतरीटीकासहिता

OPENING :

श्रीगणेशाय नमः ।

गौरीं त्रिलोकजननीं जनकं जगत्याः, शम्भुं शशाङ्ककलया च विराजमानम् ।
हृत्पुण्डरीककुहरे स्थिरभावयोगगम्यं नमामि भगवानहमर्थसिद्धयै ।। १ ।।

श्रीमदाशाधरगुरोः प्रसादात् क्रियते मया ।
तरी रसतरङ्गिण्याष्टीकेयं नातिविस्तरा ।। २ ।।

CLOSING : & COLOPHON : इति श्रीकविकलासनाथगुणनाथतनयमैथिलश्रीभानुदत्त-विरचितायां रसतरङ्गिण्यामष्टमस्तरङ्गः ॥ ८ ॥

पाण्डित्यं प्रकटीकृतं न च मया निर्मूलमत्राधुना ,
नो वा भूरितरो वृथाविरचितो वादो वितण्डात्मकः ।
कोशव्याकरणाद्यलङ्कृतिकृतां ज्ञात्वा मतं ते त्वतः ,
संक्षिप्तैः प्रतिसंस्कृतैः रसतरंगिण्याः कृतेयं तरी ।। १ ।।

आनन्दरामविबुधः प्रथितः परो यः काव्याद्यलङ्कृतिरसादिविभावकेषु ।
तत्सूनुना भगवता विदुषा कृतेयं टीकाऽधुना रसविवेकवतां मुदे स्तात् ।। २ ।।
ये मल्लिनाथकविकल्पितसम्प्रदायशिक्षाविलासरसिका विबुधा धरायाम् ।
ते [ नः ] कृतिं रसविवेकवतीमथेमां दृष्ट्वा प्रहृष्टमनसः सुतरां भवन्तु ।। ३ ।।

× × ×

अधीताऽऽशाधरगुरोर्यथा रसतरङ्गिणी ।
तथैव रचिता तस्याष्टीकेयं कृतिनां मुदे ।। ५ ।।
चन्द्राब्ध्यष्टेन्दुसंज्ञेऽब्दे १८४१ सप्तखाद्रीन्दुजे शके १७०७ ।
ज्येष्ठे शुक्लनवम्यां च जातेयं सकला शुभा ।। ६ ।।

इति श्रीमहोपाध्यायावटंकाऽऽनन्दरामभट्टात्मजभगवद्भट्टविरचितायां रसतरङ्गिणीव्याख्यायां नूतनतरीसमाख्यायामष्टमस्तरङ्गः सम्पूर्णम् ।। ८ ।।

इति श्रीरसतरंगिणीटीकायां सम्पूर्णम्

## 2475. रुद्रटालङ्कारटिप्पणकम्

OPENING : निःशेषापि त्रिलोकी विनयपरतया संनमन्ती पुरस्ताद् ,
यस्यांह्रि···सत्कांगुलिविमल···दर्शसंक्रान्त···तिस्वा ।
लीना यदभवमहारोति भीत्येव भाति ,
श्रीमन्नाभेयदेवः स भवतु भवतां शर्मणे कर्ममुक्तः ।।

पूर्वमहामतिविरचितवृत्त्यनुसारेण किमपि रचयामि ।
संक्षिप्ततरं रुद्रटकाव्यालङ्कारटिप्पणकम् ।।

CLOSING : & COLOPHON : इति नमिसाधुविरचिते रुद्रटालङ्कारटिप्पणके पञ्चदशोऽध्यायः समाप्तः । [f.54]

× × ×

एवं रुद्रटकाव्यालङ्कृतिटिप्पणकविरचना···· ।
बोधाद्वितथं विवृतं किमपीह यन्महामतिभिः ।।

संशोधनीयमखिलं रचिताञ्जलिरेखया चेह ।

त्रयस्त्रिंशच्छतैर्न्यूनं ग्रन्थोऽयं पण्डितोऽखिलः ।
द्वात्रिंशदक्षरश्लोकप्रमाणेन तु निश्चितम् ॥

CLOSING:

वैक्रमेब्दे वसुद्वीषुभूसंख्ये मासि कार्त्तिके ।
ग्रन्थोऽलेखि सिताष्टम्यां श्रीजयप्रभसूरिभिः ॥ १ ॥

यः पञ्चव्रतपालकः शुभधियामानन्दसम्पादकः,
कर्मारातिजयोद्धुरः सुगुणवान् पुण्यापगावारिधिः ।
सूरिश्रीजयसिंहपट्टकमलालङ्कारहारश्चिरं,
सूरीशो जयताज्जयप्रभ इति ख्यातः क्षमामण्डले ॥ १ ॥

Post-Colophonic: सं० १५२८ वर्षे कार्त्तिकसुदि ८ सोमे श्रीजयप्रभसूरिभिः शिष्य यशस्तिलक-पठनार्थं ग्रन्थोयं लिलिखे ।

## 2483. वाग्भटालङ्कारः सटीकः

W.-OPENING: श्रीसर्वज्ञाय नमः ।

श्रियं दिशतु वो देवः श्रीनाभेयजिनः सदा ।
मोक्षमार्गं सतां ब्रूते यदागमपदावली ॥ १ ॥

Ct.

श्रीवर्द्धमानजिनपतिरनन्तविज्ञानसन्ततिर्जये[?य]ति ।
यद्गीःप्रदीपकलिका कालतमःशमं नयति ॥ १ ॥

**वाऽभटकवीन्द्र**रचितालङ्कृतिसूत्राणि किमपि विवृणोमि ।
मुग्धजनबोधहेतोः स्वस्य स्मृतिबीजवृद्धयै च ॥ २ ॥

COLOPHON: इति श्रीसकलविबुधशिरोमणीपण्डित**सिंहदेव**विरचिता श्री**वाग्भटालङ्कारवृत्तिः** सम्पूर्णाः समजनिष्ट ।

Post.-Colophonic: वा० श्रीकुशलविमलजीशिष्य वा० श्रीकीर्त्तिसारजीशिष्य पं० रत्नचन्द्रेण गृहीता श्रीराधणपुरमध्ये । पांनो १ ओछो हतो ते सरुपचंदजी अंचलगच्छवाला तेणें पूर्ण करयो ।

## 2513. अङ्गविद्या

OPENING:

अङ्गविद्यां प्रवक्ष्यामि नारदेन च यत्कृतम् ।
अङ्गदर्शनमात्रेण ज्ञायते च शुभाशुभम् ॥ १ ॥

CLOSING:

हस्तदन्त तथा जिह्वा नेत्रै पृष्ठि समेव च ।
ललाटो कर्णमध्ये च पुत्रजन्मो विधीयते ॥ १ ॥

नाभिको नासिकाश्चैव अंगुली कडि कंठिका ।
स्तनौ गुह्यं वा मध्ये कन्या जन्मो विधीयते ॥ २ ॥

COLOPHON: इति योषिता अङ्गस्पर्शो गर्भनिर्णयः ॥

## 2514. कौतुकचिन्तामणिः

OPENING: ओं नमः ।

व्यामोहप्रथमौ(शमौ)षधं मुनिमनोमुक्तिप्रवृत्तौषधं,
दैत्येन्द्रार्त्तिकरौषधं त्रिभुवने संजीवनैकौषधम् ।
भक्तार्त्तिप्रशमौषधं भवभयप्रध्वंसनैकौषधं,
श्रेयःप्राप्तिकरौषधं पिब मनः श्रीकृष्णदिव्यौषधम् ॥ १ ॥

COLOPHON: इति **श्रीमहाराजाधिराजप्रतापरुद्रदेवकृतचिन्तामणिग्रन्थकौतुकनिरूपणं** तृतीयानां (नाम)दीप्तिः ।

Post-Colophonic: संवत् १७६३ वर्षे शाके १६२८ प्रवर्त्तमाने महावदि ५ पंचमीतिथौ भोमवासरे पूनिमगच्छे वा० श्रीविनयविजयजी वा० श्री ५ श्रीनयविजयजी वाचकशिरोमणी वा० श्रीश्रीसत्यविजयजी वा० श्रीचतुरविजयजी ऋ. उदयविजयजी ऋ. उत्तमविजय अणहल्लपुरप......लपीकृतं श्रीगुरुप्रसादात् ।

## 2534. कामसमूहः

OPENING: ..........................रंन्यस्य सुकेशपाशे ।

चूताङ्कुरानिच्छति कोकिलास्ये चूताश्रयोऽसौ कथितो वसन्तः ॥ ३७ ॥
श्रान्ते मन्मथसङ्गरे रणकृता सर्वो जनः सत्कृतो
वासोदाज्जघनस्थलस्य कुचयोर्हारः कटेर्मेखलाः ।
रागं चोष्ठपुटस्य खण्डिततनोः पाण्यो(णौ) रणत्कङ्कणे,
पाश्चात्यस्थितिकोपतःकचभरे न्याय्यं कृतं बन्धनम् ॥३८॥

COLOPHON: इति **कामसमूहे** सुरतवर्णनम् ।

Post-Colophonic: लिखितं पं० भोजकुशलेन ।

## 2536. कामसूत्रं 'जयमङ्गला'टीकासहितम्

OPENING: श्रीगोपालो जयति ।

**वात्स्यायनीयं** किल **कामसूत्रं** प्रस्तावितं कैश्चिदिहान्यथैव ।
तस्माद् विधास्ये **जयमङ्गलाख्यां टीकामहं** सर्वविदं प्रणम्य ॥ १ ॥

CLOSING: इति **वात्स्यायनटीकायां** विदग्धाङ्गनाविरहकातरेण **गुरुदत्तेन्द्रपादाभिधानेन यशोधरेण** एकत्रकृतसूत्रव्याख्यायां साधारणे प्रथमेधिकरणे शास्त्रसंग्रहः प्रथमोध्यायः ।

COLOPHON: इत्यरार्जुनभुजबलमल्लराजनारायणमहाराजाधिराजचौलुक्यचूडामणि श्रीमद्**वीसलदेवस्य भारतीभाण्डागारे वात्स्यायनीयकामसूत्रटीकाया जयमंगला**भिधानायां वैशिकमधिकरणं समाप्तम् ।

Post-Colophonic: सं० १९४५ का मीती चु(चै)तदि १४ लिखतं ब्रह्म रामनारण सीखवाल ।

## 2544. शार्ङ्गधरसंहिता

OPENING

रोगाणां गणना पूर्वं मुनिभिर्या प्रकीर्तिता ।
मयात्र प्रोच्यतेऽस्यैव तद्भेदावहो मता ॥ १ ॥

इति श्रीदामोदरसूनुना विरचितायां संहितायां चिकित्सास्थाने रसकल्पनाध्यायः त्रयोदशः । समाप्तोयं मध्यमो खण्डः ।

तत :उत्तरखण्डमारभ्यते—अथ स्नेहपानविधिः—स्नेहश्चतुर्विधः × × × × × × × समन्वितं रुक्षक्षतविषार्त्तानां वातपित्त० ।

## 2551. अनुपानमञ्जरी सस्तबका

OPENING :

श्रीधन्वन्तरये नमः ।

यस्य ज्ञानमयी मूर्त्तिः सच्चिदानन्दकारिणी ।
तस्मादपङ्कजं वन्दे ग्रन्थसंभू[पू]र्त्तिहेतवे ॥ १ ॥

धातुस्तथोपधातुश्च विषं स्थावरजङ्गमम् ।
तस्य विकारशान्त्यर्थं वक्ष्येऽनुपानमञ्जरी ॥ २ ॥

CLOSING :

संवदष्टादशे वर्षे सागरानेत्रचाधिके ।
चैत्रै सिते च पञ्चम्यां गुरुवारे च ग्रन्थकृत् ॥ ३६ ॥

कूर्मदेशेऽर्जुनपुरः तत्र वासी सदा किल ।
गुरुजीवाभिधानस्य गच्छ चागमसंज्ञकः ॥ ४० ॥

तस्य पीताम्बरो शिष्यः तत्पादवन्दकः सदा ।
देवगुरुप्रसादेन विश्रामः ग्रन्थकारकः ॥ ४१ ॥

COLOPHON : इति श्रीअनुपानमञ्जर्यां धातूपधातुमारण-रोगानुपानप्रकर्णं नाम पञ्चम-समुद्देसः । समाप्तोऽयमिदं ग्रन्थः ।

Post.-Colophonic : सं० १८५६ ना चैत्र वदि ३ शनौ ।

## 2552. अनुपानविधिः

OPENING :

श्रीधन्वन्तर्यै नमः ।

नत्वा धन्वन्तरिं देवं गणाध्यक्षं दिवौकसाम् ।
अन्नपानविधिं वक्ष्ये समस्तमुनिसत्तमम् ॥ १ ॥

CLOSING : & COLOPHON :

[f. 24] इत्यायुर्वेदमहोदधौ श्रीसुषेणकृते धूपाधिकारः ।

× × ×

न जीवत्यौषधद्वेषी भक्तद्वेषी न जीवति ।
न जीवति भिषग्द्वेषी बहुवैद्यो न जीवति ॥ १ ॥

इति श्रीसुषेणग्रन्थ सम्पूर्णम् ।

Post-Colophonic : लिखितं ऋष भवानीचंद सं० १८२४ वर्षे मिती श्रावण सु ११ गुरुवासरे सवाई जैपुरमध्ये लिखित्वा आत्मार्थे शुभं भवतु ।

## 2553. आनन्दमाला

OPENING : श्रीगणेशाय नमः ।

जयति जगति विष्णुः श्रीनृसिंहाख्य एष दितिजदनुजदाहाज्ज्वालनान्तः कृशानुः ।
सकलनिजजनानां ज्ञानविज्ञानहेतुः प्रकटितनिजदेहं तं ह्रीं····· सर्वतोऽस्मि ।। १ ।।

× × ×

**आनन्दभारतीनामा** (म्ना) **यतीन्द्रेण** प्रकाश्यते ।
आनन्दार्थं पण्डितानां **आनन्दस्तु** मालिका ।। ४ ।।

आनन्दमाला सुखवीर्यमाला मन्दारमाला रसशृङ्गमाला ।। ५ ।।

विद्युत्तमाला प्रविलासमाला विमुक्तमाला मम सुप्रमाला ।

नाहं योगेश्वरो देवो न मनुष्यो न आत्मवित् ।
श्रीनृसिंहस्य चरणयोः परागरेणुवित्सदा ।। ६ ।।

COLOPHON : इति श्रीपरमहंस**आनन्दभारती**विरचितायां **आनन्दमालायां** रक्तमोक्षाधिकारः । समाप्तोऽय**मानन्दमाला** ।

Post-Colophonic : संवत् १७५२ वर्षे आश्विनमासे कृष्णपक्षे चतुर्दशीतिथौ दैत्यगुरुवासरे लिपीकृता वाचनाचार्य श्रीनेमहर्षजीगणि तत्शिष्यमुख्य पं० प्रवर श्रीमुनिमाणिक्यगणिः तत्शिष्य-मुख्य पं० प्रवर श्रीमतिसेनजी तत्शिष्य पं० अभयराजेन लिलेख । स्वपठनाय श्रीरस्तुः ।

## 2557. औषधपल्लवी तथा वस्त्रपल्ली

OPENING : अगरकर्पूरसंयुक्तं चंदनं टङ्कणं तथा ।
तगरं पद्मरागं च युवानी सितपत्रका ।। १ ।।

CLOSING & COLOPHON : आम्ना सुगुरूपदेशात् । **औषधपल्लीवी**

अटाणं कमषाबश्च चोपिकं टसरं तथा ।
तरङ्गं पट्टकूलं च जरबाफं च शालुकम् ।। १ ।।

अक्षरं च गजप्रोक्तं अंगुलसंज्ञा च मात्रकम् ।
एवं गुरूपदेशेन **वस्त्रपल्ली** प्रकीर्त्तिता ।। २ ।।

## 2565. कालज्ञानं सटीकम्

OPENING : **कालज्ञान**कलायुक्तं **संभू**(शम्भु)**नाथेन** भाषितम् ।
मासै(:) षड्भिरप्येवं जायते मृत्यु रोगिणाम् ।। १ ।।

**टीका**—श्रीमहादेव को भाष्यो कालज्ञान कालयुक्त काल रो ग्यांन कहतां जाणिवो मृत्यु रौ प्रमाण जाणीजै छ मास पहिली रोगीया रौ मरण कही जै ।

CLOSING :

श्लो० वातके सप्तरात्राणि दशरात्राणि पित्तके ।
श्लेष्मणा द्वादशाहेन ज्वरपाकं ततो वदेत् ।। ४८२ ।।

COLOPHON :

इति श्री**कालज्ञाने वैद्यके** सर्वज्वरचिकित्सा सम्पूर्णोयम् ।

Post-Colophonic :

ऋषिराजश्रीदलपतिजीशिष्य ऋषि लालचंद रुघनाथ मयाचंद वाचनार्थं लेखक-पाठकयो शिवोत्षन्नमेव वांछा । संवत् १७६१ वर्षे माघमासे शुक्लपक्षे तिथि एकादशी रोहणीयवासरे लिखतं रुघनाथेन पश्चात् पहौरै सम्पूर्णमिदं पुस्तका श्रीरस्तु ।

## 2566. कूटमुद्गरः सटीकः

OPENING :

कफवातौ वातकफौ वातः पित्तं च वृद्धिसमौ ।
त्रिभिराधैस्त्रिभिरन्त्यैस्त्रिभिराद्यपरैस्तदन्यैश्च ।।

मधुराम्ललवणकटुतिक्तकषायाः षड्रसाः, तत्र त्रिभिराद्यैः × × × × × अन्त्यौ तिक्तकषायैः तैः पित्तं शमं यातीति व्याख्यानय(म्) इति ।

CLOSING & COLOPHON :

**भिषजा माधवेनेदं** किं ज्ञानेनाल्पदर्शिना ।
यत्किञ्चिदुक्तमज्ञानात् तत्क्षमध्वं मनीषिणः ।। २ ।।

किं ज्ञानेन निन्द्यज्ञानेन अल्पदर्शिना अल्पाध्ययनेन अनेन आत्मनः सविनयत्व-मुक्तम् । इति **माधव**विरचितः **कूटमुद्गरः** ।

## 2577. पट्टीप्रकाशः

OPENING :

श्रीगणेशाय नमः ।

नत्वा हेरम्बमादौ तदनु गुरुवरं रोगहर्त्तारमीशं ,
वैद्यं धन्वन्तरिं वै जगति नरवराः क्लीबरूपा भवन्ति ।
तेषां क्लीबत्वहर्थ्यं वरतनुयुवतीनां सुखार्थं करोमि
वृद्धिं लिङ्गस्य पौष्टयं चरति सुखकरैरौषधीनां विलासैः ।।१।।

दृष्ट्वा ग्रन्थशतं बुद्ध्वा ह्यौषधीनां प्रभावतः ।
**पट्टीप्रकाशं लिङ्गस्य** ब्रुवे शास्त्रानुसारतः ।। २ ।।

CLOSING & COLOPHON :

एते कोकस्य शार्ङ्गधरपद्धत्या लिखितम् ।

इति **व्यासदेवीचन्द्र**विरचितायां **पट्टीप्रकाश** समाप्तम् ।

Post.-Colophonic :

संवत् १६२६ का फाल्गुनकृष्ण १० लि० कवीश्वर जैलालेन कृष्णगढमध्ये ।

## 2578. पथ्यापथ्यविनिश्चयः सस्तबकः

OPENING :

श्रुत्वा रजःसत्वतमांसि विश्वं निर्मीति याति क्षिपति स्वयं ये (यः) ।
[निः]शेषवृन्दारकवृन्दवंद्यः पायादपायान् मनुजानि(न्गि)रीशः ।। १ ।।

आलोक्य वैद्यतन्त्राणि यत्नादेष निबद्ध्यते ।
व्याधितानां चिकित्सार्थं **पथ्यापथ्यविनिश्चयः** ॥ २ ॥

COLOPHON : इति विषरोगपथ्यापथ्याधिकारः ।

Post.-Colophonic : संवत् १६२० का माघमासे कृष्णपक्षे तिथौ सप्तमी अर्कवासरे लिखतं पं० कस्तुरिचन्द्रेण बिदासर नगरमध्ये ।

## 2580. पाकावली

OPENING श्रीगणेशाय नमः ।

तत्रादौ बृहत्पूगपाक :—

पूगं दक्षिणदेशजं दशपलोन्मानं भृशं कर्त्तयेत् ,
तच्छिन्नं जलयोगतो मृदुतरं संकुटय चूर्णीकृतम् ।
तच्चूर्णं प्रतिशोधितं वसुगुणे गोशुद्धदुग्धे पचेद् ,
गव्याज्यांजलिसंयुतेति निविडे दद्यात्तुलार्द्धां सिताम् ॥१॥

COLOPHON : इति महाकामेश्वरो मोदकः । एतस्यामफरे इति संज्ञा वदन्ति । इति श्री**पाकावली** समाप्ता ।

## 2581. भिषक्चक्रचित्तोत्सवः (हंसराजनिदानम्)

OPENING : श्रीपार्श्वनाथाय नमः ।

ध्यायेद् बालां प्रभाते विकसितवदनां फुल्लराजीवनेत्रां ,
मुक्तावैडूर्यगर्भै रुचिरकनकजैर्भूषणैर्भूषिताङ्गीम् ।
विद्वत्कोटिच्छटाभां परिमलबहुलां दिव्यसिंहासनस्थां ,
गीर्देवी तस्य दासी भवति सुरवनं नन्दनं केलिगेहम् ॥ १ ॥

× × ×

**भिषक्चक्रचित्तोत्सवं** जाड्यनाशं करिष्याम्यहं बालबोधाय शास्त्रम् ।
नमस्कृत्य धन्वन्तरिं वैद्यराजं जगद्रोगविध्वंसनं **स्वेन नाम्ना** ॥ ५ ॥

देशं बलं वयः कालं गुर्विणीं गदमौषधम् ।
वृद्धवैद्यमतं ज्ञात्वा चिकित्सामारभेत् ततः । १० ॥

CLOSING : **भिषक्चक्रचितोत्सवं वैद्यशास्त्रे** कृतं **हंसराजेन** पद्यैर्मनोज्ञैः ।
सुहृदै (हृद्यै) रदोषैरुरोध्वान्तनाशं हरेरंघ्रिसंसेविना नन्दमूर्त्तेः ॥ १ ॥

× × ×

महामंगले मंगले मंगलेशे शिवे कालिकेऽम्बे मुदारेऽकलेशे ।
शुभे वाकले विश्वकृच्चकान्ते नमस्ते नमस्ते नमस्ते नमस्ते ॥ ३ ।

COLOPHON : इति श्री**भिषक्चक्रचित्तोत्सवं वैद्यशास्त्रं हंसराज**कृतं समाप्तम् ।

Post-Colophonic : लिखितं श्रीश्रीश्रीश्रीश्रीश्री १०८ मत्पूज्याचार्य विमलचन्द्रस्वामिजित: शिष्येण श्रीश्रीश्रीश्रीश्रीश्री १०८ मत्पूज्याचार्य रामचन्द्रस्वामिजितो लघुगुरुभ्रात्रा जेजों नगरे संवत् १९१२ कार्त्तिक सुदि ६ रविवासरे ।

## 2583. मल्लप्रकाशः

OPENING:

ओं नमो गणेशाय ।

नत्वा गोपालबालं गिरिशगणपती शारदामांजनेयं,
भानुं भक्त्या भवानीं निजगुरुचरणौ मानसे स्वे निधाय ।
ब्रूते हस्तप्रपाटीविधिमिह गदितां **मल्लबोधाय** पूर्वै-
रभ्यस्तां दृग्प्रयोगां विहितबहुफलां **लोकनाथः** समासात् ।। १ ।।

CLOSING :

आसीद् **योधपुरे** पुरन्दरपुरी पूर्णाथिकामे पुर(रे),
गीर्वाणागमगानमानवगणागीतः स गांगेयवत् ।
गागागो गुणयानदानरसिको **राठ्योड**(ठौड)**राजो** भुज-
त्रस्यद्भूपशिरोमणिव्रजलसत्पादारविन्दः कृती ।। ५ ।।
तत्पुत्रः पूर्णसत्रः सुरसरिदमलांभःपवित्रः समित्र-
स्तेजोभिः प्रीतमित्रं मदनरसकलाकल्पनावत् कलत्रः ।
भूमीशो **मल्लदेवो** जगति विजयते वैरिभिः प्रार्थ्यसेवो,
दानाम्भः कुम्भरिक्तीकृतमि(इ)व जलधिर्भ्रातिसत्वादिदेवः ।। ६ ।।
तेनायुर्वेदरत्नाकरबहुमथनात् कारितो दृष्टयोगो,
ग्रन्थोऽयं भूरियुक्त्या कुलगदिगदहृत् **मल्लदेवप्रकाशः** ।
यं दृष्ट्वा वैद्यविद्याकुलनिजमतियुक् स्वस्थवद्वैद्यपुत्रो,
राजानं वा जनं वा मुनिजनमथवा वीतरोगं करोतु ।। ७ ।।

× × ×

निर्मथ्य **मल्लदेवेन** सदायुर्वेदसागरम् ।
**मल्लप्रकाश**नामायं कारितः सङ्ग्रहः शुभः ।। १० ।।

COLOPHON : इति श्री**मल्लप्रकाश**नामा **लोकनाथ**विरचितः सम्पूर्णोऽभवद् ग्रन्थः ।

Post-Colophonic : संवत् १६४३ वर्षे शिशिरऋतौ तपस्यमेचकपक्षे त्रयोदश्यां तिथौ जीववासरे उषा-नक्षत्रे अद्येह पुण्यदिने श्रीसुभटपुरस्थेन वा० श्रीदेवशेखरशिष्येण वा० जयवन्ताह्वयेना लेखि । श्रीमच्छ्रीउदयसिंहविजयराज्ये ।

## 2596. योगचिन्तामणिः सस्तबकः

OPENING :

श्रीगणेशाय नमः ।

यत्र चित्राः समायान्ति तेजांसि च तमांसि च ।
महीय(म)स्तोदयं वन्दे चिदानन्दमयं महः ।। १ ।।

CLOSING :

सूरीश्वरप्रवरसंघशिरोवतंसश्री **चन्द्रकीर्ति**गुरुपादयुगप्रसादात् ।
गम्भीरचारुतर**वैद्यकशास्त्रसारं** **श्रीहर्षकीर्तिवरपाठक** उद्धार ॥ १ ॥

यथा योगप्रदीपोऽस्ति पूर्वं **योगशतं** यथा ।
तथैवायं विजयतां **योगचिन्तामणि**श्चिरम् ॥ ५ ॥

**नागपुरीयतपोगण**राजश्री**हर्षकीर्ति**संकलिते ।
**वैद्यकसारोद्धारे** सप्तमको मिश्रकाध्यायः ॥ ६ ॥

COLOPHON :

श्री**नागपुरीयतपागच्छीय** **हर्षकीर्ति**सूरिसंकलिते **श्रीयोगचिन्तामणौ** **वैद्यकसारसंग्रहे** मिश्रिकाध्यायः समाप्तः सप्तमम् ॥७॥

इति श्री**योगचिन्तामणि** **वैद्यकशास्त्रं** सम्पूर्णम् ॥

श्रीमत्**खरतरगच्छे** शिष्यः श्री**रत्नराजराजानाम्** ।
**योगचिन्तामणि**ग्रन्थो लोकगिरा चकार **नरसिंहः** ॥ १ ॥

Post-Colophonic : संवत् १७७७ वर्षे चैत्रवदि ७ गुरुवासरे । लिखितं मेडतानगरे ।

## 2600. योगशतकं सार्थम्

OPENING :

स्वस्थं प्राङ्मुखमासीनं **समे** देशे शुचौ स्थितम् ।
उपसर्पति यो वैद्यं स च कार्यकरः स्मृतः ॥ १ ॥

एवंविध वैद्यनें येह तेडै ते काज गरु जांणवा ।

CLOSING :

गुणाधिकं योगशतं विधाय प्राप्तं मया पुण्यमनुत्तमं यत् ।
नानाप्रकारामयनाशहेतुं कृत्स्नं जगत् येन भवत्यरोगम् ॥

COLOPHON : इति श्री**पण्डितवामन**विरचितं आयुर्वेदोक्तं **योगशतं** लिखितम् ।
इति श्री**योगशतकस्य** **किञ्चिट्टिप्पनकम्** । ग्रन्थान्तरश्लोकानामपि ।

Post-Colophonic: संवति १८१४ वर्षे भाद्रवाशुदि १३ तिथौ ।

## 2603. योगशतकं (वाजीकरणतन्त्रं) सस्तबकम्

OPENING :

श्रीगणेशाय नमः ।

कृत्स्नस्य तंत्रस्य गृहीतधाम्नी(म्नः) चिकित्सिताविप्रसृतस्य दूरम् ।
विदग्धवैद्यप्रतिपूजितस्य करिष्यते **योगशतस्य** बन्धः ॥ १ ॥

COLOPHONS : इति **वाजीकरणतन्त्र** समाप्तम् । इति **योगसतं** समाप्तम् ।

Post.-Colophonic : संवत् १८४३ ना पोष वद १३ ।

## 2605. योगशतक-वैद्यवल्लभाटीका

OPENING :

ओं नमः श्रीशिवाय नमः ।

नमः कण्ठोल्लसत्कान्तिपुञ्जपल्लवशायिने ।
जगन्नगरनिर्माणपूर्णकुम्भाय शम्भवे ॥

× × ×

सारत्वात् सारदृष्टीनामल्पत्वादल्पमेधसाम् ।
.........उपयुक्तमुभयेषां भविष्यति ।। ४ ।।

COLOPHON इति **रूपनयन**कृता **वैद्यवल्लभाख्या योगशतटीका** समाप्ता ।।

## 2608 वैद्यकप्रास्ताविकसंग्रहः (वैद्यसुभाषितम्)

OPENING

ओं नमः सिद्धेभ्यः । श्रीगुरुभ्यो नमः । अर्हम् ।

चैत्रमासे गुडाहारा बह्वाहाराश्च कार्त्तिके ।
माघे पौषे निराहारा भवन्तु तव शत्रवः ।। १ ।।

CLOSING:

अजाविकाः प्रलापाख्याः करभौ वातकौ भवेत् ।
हारिद्रको महिषीणां मृगरोगो मृगेषु च ।। ६३५ ।।
पक्षिणां.................................।

अग्रिमपत्रं न लब्धम् । श्रेयस्तात् सदा । श्रीः ।

Post.-Colophonic :

अंकव्योमगजाब्जाब्दे कार्त्तिके पाण्डुरे दले ।
रत्नसंख्याविधौ सौख्य देवर्षिणा लिपौ(पी)कृतम् ।।

## 2622. वैद्यवल्लभः सस्तबकः

OPENING

सरस्वतीं हृदि ध्यात्वा नत्वा श्रीगुरुपंकजम् ।
सद्हस्तिरुचिना **वैद्यवल्लभो**ऽयं विधीयते ।। १ ।।

CLOSING :

इति **तपागच्छे महोपाध्यायश्रीहितरुचिगणि**तच्छिष्यकवि**हस्तिरुचि**विरचिते **वैद्यवल्लभो** नामाष्टमो विलासः ।। ८ ।।

आर्या— तेषां शिशुना **हस्तिरुचिना वैद्यवल्लभो** ग्रन्थ(:) ।
रसनयनमुनीन्दुवर्षे परोपकाराय विहितोऽयम् ।। १७ ।।

COLOPHON : इति श्री**कविहस्तिरुचि**विरचित**वैद्यवल्लभो** सम्पूर्णम् ।

Post.-Colophonic : पूज्यप्रवरपण्डितोत्तिमशिरोमणि पूज्य ऋषि श्री १०८ जेसिंघजीशिष्य ऋषि देवीचन्द लिपीकृतम् । ग्राम खण्डपमध्ये । संवत् १७९८ वर्षे कार्त्तीकमासे शुक्लपक्षे १५ तिथौ बुधवासरे ।

## 2623. वैद्यविनोदः

OPENING :

श्रीगणेशाय नमः ।

सकलसुखनिधानं भुक्तिमुक्तिप्रदं यज्जयति जगति सिद्धैस्सर्वदोपास्यमानम् ।
करकलितवराब्जाभीतिखड्गं प्रसन्नं दिशतु फलमभीष्टं श्यामधामाम्बिकायाः ।।१।।

अनन्तनामा हि दिगन्तकीर्त्तिः श्रीगौडवंशः प्रथितप्रभावः ।
तदात्मजः शङ्करनामधेयः शास्त्रेषु काव्येषु परं प्रवीणः ।। २ ।।

राजाधिराजो जयसिंहवीरः ख्यातः पृथिव्यां महनीयकीर्तिः ।
प्रतीपभूपालनिवारणेन प्रतापपुञ्जज्वलदग्निकल्पः ।। ३ ।।

तदात्मजो रामसमानसारो नाम्ना चिरायुर्नृपरामसिंहः ।
रूपेण दानेन पराक्रमेण तिरस्कृतानङ्गसुरद्रुमेन्द्रः ।। ४ ।।

दानं यदीयं परिकल्पितं यद् दृष्टैव सेन्द्राः सुरपादपाद्याः ।
मानं परित्यज्य विमृश्य बुद्धया स्थितिर्निजामेति दिवं प्रयाताः ।। ५ ।।

क्षेमस्य योगस्य च मे विधातुस्तस्याज्ञया ग्रन्थकृतादरेण ।
ये ये प्रयोगा बहुशोऽनुभूतास्ते ते मया संलिखिता विमृश्य ।। ६ ।।

प्रणम्य मान्यान् विनिवेदयामि ग्रन्थं मुदा पश्यत सावधानाः ।
दृष्टे यदस्मिन् परमः प्रमोदो भवेत्तथा सिद्धिरपि प्रकृष्टा ।। ७ ।।

हारीतपाराशरसुश्रुतानां संगृह्य सारं विधिवत्समासात् ।
सौख्याय रोगार्दितमानवानां विधीयते वैद्यविनोद एषः ।। ८ ।।

COLOPHON : & Post.-Colophonic :

इति श्रीमदनन्तभट्टात्मजभट्टशङ्करविरचिते वैद्यविनोदे निदानचिकित्सावृक्षरसायन-जलयोगवमनविरेचनानुलोमनादिभेदक्वाथकल्पनादिलक्षणविलेपीमण्डादिघृततैलविधान-वस्तिनस्यधूमपान गण्डूषविधिपरिभाषा व्योषत्रिफलापंचमूलादिसंज्ञा रसवीर्यविपाकगुण उत्क्लेदादिलक्षण-केशकृष्णीकरणयुक्तायुक्तविचारोल्लासः वैद्यविनोदः समाप्तः श्रीरस्तु मिती आसाढ शुदि ११ शनि संवत् १८८३ का लिखतं पंडित देवकरण किसनगढमध्ये मंदिरलुहाड्या कै स्थितं ।। श्रीकल्याणमस्तु ।। श्री श्री ।। श्री श्री ।। श्री श्री ।

## 2639 हितोपदेशः

OPENING

श्रीधन्वन्तरये नमः ।

भक्तेभ्यो भुवनाधिपत्यवरदं देवैर्महेन्द्रादिभिः
सम्यग्रत्नकिरीटकोटिमणिभिः प्रोद्घृष्टपादाम्बुजम् ।
संसारभ्रमभीतिशान्तमनसो ध्यायन्ति यं योगिनः
तं वन्दे शशिखण्डमण्डितजटाजूटं ध्रुवं धूर्जटिम् ।। १ ।।

× × ×

हितोपदेशनामायं ग्रन्थः **श्रीकण्ठशम्भुना** ।
रोगिरोगोपकाराय क्रियतेऽतिसमासतः ।। ६ ।।

CLOSING :

मुक्ताफलैर्विविधदामकृता सुवृत्तैः सम्पूरिता विमलकान्तिगुणेन युक्ता ।
**श्रीकण्ठ**पण्डितकृता बुधकन्धरासु मुक्तावलीव लुठतां रुचिरा चिराय ॥३६॥

COLOPHON :

इति **श्रीकण्ठ**विरचिते-**हितोपदेश**नाम्नि **वैद्यकसारसंग्रहे** दशमोद्देशः सम्पूर्णः तत्समाप्तौ च पूर्णोऽयं **हितोपदेश**नामा ग्रन्थसन्दर्भः ।

## 2650. हृदयदीपकनिघण्टुः

OPENING :

श्रीगणेशाय नमः ।

मनुं धन्वन्तरिन्नत्वा दिव्यश्रीलक्ष्मणात्मजः ।
करोति वैद्यसर्वस्वं एकद्वित्र्यौषधामृतम् ॥ १ ॥

CLOSING :

यो वैद्यवंद्यपद**केशव**वैद्यसूनुर्विद्वज्जनार्चितधनेश्वरहृद्यशिष्यः ।
स स्वल्पवाग्भटकृतप्रभृतिप्रकाशं चक्रे **निघण्टु**ममलं द्विज**बोपदेवः** ॥ १ ॥

विद्वद्धनेश्वरच्छात्रो भिषक्केशवनन्दनः ।
बोपदेवश्चकारेमं विप्रो देवपदास्पदः ॥ २ ॥

COLOPHON :

इति श्रीवैद्यवन्द्यबोपदेवरचितो हृदयदीपकनिघण्टुः समाप्तः ।

Post-Colophonic :

संवत् १७७१ वर्षे पोस सुदि ६ भृगुवासरे ।

## 2651. पालकाप्यगजायुर्वेदः

OPENING :

श्रीसारदायै नमः । पालकाप्याय ।

प्रत्यूहव्यूहविच्छेदकारणं गणनायकः ।
जयति स्थिरसम्पत्तिर्गजभक्तनिदर्शनः ॥ १ ॥

× × ×

अथ **वनानुचरितमध्यायं** व्याख्यास्यामः ।
**अङ्गा**नामधिपः श्रेष्ठः श्रीमानिन्दुसमद्युतिः ।
वेदवेदाङ्गतत्त्वज्ञः सर्वशास्त्रविशारदः ॥ ४ ॥

× × × ×

**अङ्गदेशे**ष्वभूच्छीमान् **रोमपादो महीपतिः** ।
गजारोहणशक्रेव धृतबुद्धिर्जितश्रमः ॥ ७ ॥

COLOPHON :

इति श्री**श्रीपालकाप्ये गजायुर्वेदमहाप्रवचने** क्षुद्ररोगस्थानं २ समाप्तम् ।

## 2653. कौतुकलीलावती

OPENING :

नत्वा नारायणं रुद्रं गणेशं भारतिं(तीं)गुरुम् ।
सारोद्धारं प्रवक्ष्यामि ज्योतिषां क्षीरधेरिव ॥ १ ॥

CLOSING :

रेखाश्च द्विगुणा(:)कार्यास्तृतीयांशेन वर्जिताः ।
पक्वे फलेऽनुबीजानि निर्वाख्ये प्रस्फुटं फलम् ॥ १६ ॥

COLOPHON :

इति **कौतुकलीलावती** समाप्ता ।

## 2654. गणितमकरन्दं सटीकम्

OPENING :

गणपते जयते जयमन्मति सुवरदो वरदोश्चतुरङ्कितः ।
अतिपरागपरागतपङ्कजैर्नरसुरैरसुरैः परिपूजितः ॥ १ ॥

× × ×

**मकरन्दं** महाशास्त्रमेतद्**गणित**पूर्वकम् ।
अवगाहितुमहं मन्द उद्यतः कृपया गुरोः ॥ ३ ॥

CLOSING :

**वडनगर**निवासी **नागराख्यो** द्विजेन्द्रो गणितगुणविशालो **भूधरो गूनु**सुनुः ।
तदिह चरणसेवी **रामदासो** बभूव स **गणितमकरन्दं** शास्त्रमेतच्चकार ॥ ६ ॥
श्रीमच्छ्री**सूर्य**सिंहे नृपवरतिलके शासतीलां नृपेन्द्रे ,
ख्याते **श्रीमालवंशे** सकलभुवि वरो **रामदासाचलो** हि ।
सूनु**र्विद्याधर**स्यागणितगुणगणौ द्वावभूतौ(तां)द्विजेन्द्रौ ,
धीमान् श्रीमान् तयोश्च स्वगुरुपदरतो **रामदासो** बभूव ॥७॥
स **गणितमकरंदं** चित्रितं चित्रभावैरकलितगणिताब्धेः प्रस्फुटं भूप्रशस्तम् ।
उदहर्रदिति मित्राभ्रातरः तत्कृतौ मे विबुधजन भवद्भिः क्षम्यतां साध्वसाधु ॥ ८ ॥

COLOPHON :

इति श्री**गणितमकरन्दे दवेरामदास**विरचिते वक्रमार्गादि - उदयास्तग्रहयुतिव्यतिपातौ चन्द्रदर्शनो नामाध्यायोऽष्टमः । समाप्तोयं ग्रन्थः ।

Post-Colophonic :

संवत् १८६६ रा प्रथम असाढ सुद २ गुरौ लिखितं व्यासजी श्रीविजैरामजी पुत्र हरनारायण तत्पुत्र हरकृष्ण गणेशराम भगवांन पठनार्थम् । गढजालोरवास्तव्यं । श्रीवैजनाथजीप्रसादात् श्रीरस्तुः ।

## 2659. गणितसारः सार्थः

OPENING :

श्री गणेशाय नमः ।

महादेवं प्रणम्यादौ बालानां बुद्धिवृद्धये ।
**स्वीयसूत्रै**रहं वक्ष्ये **पञ्चविंशतिका**मिमाम् ॥ १ ॥

**अर्थ**—महादेवनैं प्रणाम करीनैं बालकनी बुद्धिनै अर्थे पोतानैं सूत्रें करी गणित-पंचवीसी कहूं छूं ।

COLOPHON :

इति श्री**शम्भूनाथ**विरचितो **गणितसारः** सम्पूर्णः ।

## 2674. आरम्भसिद्धिः सटोका

OPENING :

ओं नमः श्रीसर्वज्ञाय ।

श्रीधर्मन्यायसम्यग्व्यवहृतियुवतेर्जीवलोकेन भर्त्रा,
श्रेष्ठे तादृ[ङ्]ग्मुहूर्त्ते परिणयनमिहाऽचीकरद् यो युगादौ ।
लीलायेते यथैतौ सततमवियुतौ सत्फलाद्यौ स दत्तां
वस्त्वन्तः सिद्धिसौधे सुसमयमृषभस्वामिदैवज्ञराजः ॥ १ ॥

× × ×

इह किल सकलत्रिवर्गयथाकामार्जनगर्जत् । श्री**गोर्जरजनपदमहीमहेन्द्रश्रीवीर-धवलनरेन्द्र**प्रदत्तसर्वव्यापाराधिकारेण श्री**शत्रुञ्जयोज्जयन्तार्बुदादिमहातीर्थेषु** अर्बुदा-म्बुजखर्वादिसंख्यस्ववित्तविनियोगत × × × × **संघपतिश्रीवस्तुपालमन्त्रीश्वरेण निर्मापिताचार्यपदप्रतिष्ठाः श्रीनागेन्द्रगच्छ**गरिष्ठाः सज्ज्ञानक्रियागुणभूरयः श्रीमन्त **उदयप्रभदेवसूरयो** × × × × × एनं ग्रन्थं अग्रन्थयत् ।

CLOSING :

श्रीसूरीश्वर**सोमसुन्दर**गुरोर्निःशेषशिष्याग्रणी-
र्गच्छेन्द्रः **प्रभुरत्नशेखर**गुरुर्देदीप्यते साम्प्रतम् ।
तच्छिष्याश्रवहेमहंसरचितस्यारम्भसिद्धेः **सुधी-**
**शृङ्गाराभिधवार्त्तिकस्य** बुधताः ५ संख्याविमर्शोऽभवत् ॥१॥

× × ×

श्रीमद्विक्रमवत्सरे मनुतिथौ १५१४ शुक्लद्वितीयातिथौ,
नक्षत्रे गुरुदेवते गुरुदिने मासे शुचौ सुन्दरे ।
**आशापल्लिपुरे** पुरःप्रतिनिधेः श्रीमद्युगादिप्रभो-
र्ग्रन्थः सैष समर्चितः प्रथयताद् आद्यं पुमर्वंस(नर्वंश)ताम् ॥११॥

COLOPHON :

इति श्री**तपागच्छ**पुरन्दरश्री**सोमसुन्दरसूरि**श्री**मुनिसुन्दरसूरि**-श्री**जयचन्दसूरि**प्रमुख श्रीगुरुसाम्प्रतविजयमान । श्रीगच्छनायकश्री**रत्नशेखरसूरि**चरणकमलसेविना **महोपाध्यायश्रीचारित्ररत्नगणि**प्रसादप्राप्तविद्यालवेन **वाचनाचार्यहेमहंसगणिना** स्वपरोपकाराः संवत् १५१४ वर्षे आषाढशुदिद्वितीयायां निर्मितमिदं । **सुधीशृंगाराख्यं** श्री**आरम्भसिद्धिवार्तिकं** सर्वथासावद्यवचनविरतैः सुविहिताचार्यवर्यैः वाच्यमानं चिरं नन्दतात् ।

Post.-Colophonic :

संवत् १६६२ वर्षे चैत्रशुदि ६ शनौ लिखितम् । ग्र. ५७५० सर्वग्रं. ।

## 2701. गिरिधरानन्दम्

OPENING : श्रीगणेशाय नमः ।

नत्वा श्रीभुवनेश्वरीं गणपतिं विष्णुं च रुद्रं द्विजान् ,
नृ······थ पयोनिधीन् दृढधिया निर्मथ्य धीवृद्धिदम् ।
ग्रन्थं **गौडकुलोद्भवस्य नृपते**रानन्दसिद्धिप्रदं ,
वक्ष्ये बालविनोदनाय विमलं **वेदाङ्गरायाह्वयः** ॥ १ ॥

× × ×

यद्दोर्दण्डप्रचण्डाहितज(नृ)गजघटाकुम्भभित्खड्गनागः ,
पीत्वा रक्तं समन्ताद् वमति बहुतरं कीर्त्तिकर्पूरमेव ।
तस्य **श्रीगौडनाथप्रबलगिरिधरस्याज्ञया** चारु कुर्वे ,
ग्रन्थं सत्संहिताभिः कलित**गिरिधरानन्द**नामानमुग्रम् ॥ १ ॥

CLOSING : शुभैरदृष्टे विमले द्यूनभे ग्रहवर्जिते ।
जाताया इह कान्ताया भवेत् कापुरुषः पतिः ॥ १६५ ॥
द्यूने शुक्रे गृहे·······················

## 2716. ग्रहलाघव'सिद्धान्तरहस्योदाहरणटीका'

OPENING : श्रीगणेशाय नमः । श्रीवरदमूर्त्तिर्जयति ।

ज्योतिर्विद्गुरुणा **गणेशगुरुणा** निर्मथ्य शास्त्राम्बुधिं ,
यच्चक्रे **ग्रहलाघवं** विवरणं कुर्वेऽथ सत्प्रीतये ।
स्मृत्वा **शम्भुसुतं दिवाकरसुतं**स्तद्**विश्वनाथः** कृती ,
जाग्रज्ज्योतिषवर्गगोकुलपरित्राणाय नारायणः ॥ १ ॥

COLOPHONS : इति श्रीसकलागमाचार्यवर्यश्री**केशवसांवत्सरात्मज**श्रीमद्**गणेशदैवज्ञ**विरचिते-**ग्रहलाघवे सिद्धान्तरहस्ये** पानसाधनाधिकार (:) चतुर्दशमः संपूर्णः । श्री**ग्रहलाघवनाम** ग्रं[थ]करणोत्तमज्याचापरहितकर्म्म संपूर्णं ॥ १४ ॥ श्रीरस्तु ।

इति श्रीमदमलमहीमण्डलमण्डनज्योतिर्विच्छिरोमणिज्योतिर्वित्-(न्)मत्तेभकुम्भदलनप्रोद्यत्प्रतापानलश्रीम**द्दिवाकरसूनु**श्रीमत्(द्) **विश्वनाथदैवज्ञ**विरचिते **ग्रहलाघवोदाहरणं** समाप्तं । इति श्री**ग्रहलाघवोदाहरणं** समाप्तमिति मङ्गलम् ।

## 2720. ग्रहसिद्धिप्रकरणम्

OPENING : श्रीसरस्वत्यै नमः ।

सिद्धिं करोत्यैश्यजकेन्द्रभोर्बीनादीन् शिवौ क्षेत्रपं वाङ्गुरुंश्च ।
चक्रेश्वरारब्धनभश्चराशुसिद्धे**र्महादेव** ऋषींश्च नत्वा ॥ १ ॥

CLOSING :

ईश्वरश्चौवरसौदास-मध्ये सामजोग्रजन्मासीत् ।
श्रीभोगदेवनामा गौतम(:) स दैवज्ञः ।। ४१ ।।

तत्पुत्रो माधवदेववितसु(स्तत्सुत) पद्मनाभदैवज्ञः ।
तज्ज्ञो(ज्जो) गोदानेराशीर्णं परसरामदैवज्ञः ।। ४२ ।।

तज्जमहादेवेन ग्रहसिद्धौ सिद्धायतीतं गतम् ।
श्रेयसा(से)भवानी भवश्च भवतु द्विजप्रजावृद्ध्यै ।। ४३ ।।

COLOPHON : इति श्रीमहादेवकृते ग्रहसिद्धौ श्लोकाः । शुभं भवतु ।

Post.-Colophonic : लिखितं मुनिलक्ष्मीरत्नेन केनेदं पुस्तकम् ।

## 2723. चक्रावली

OPENING : श्रीगुरुभ्यो नमः । श्रीगणेशाय नमः ।

अथ चक्रावलिर्लिख्यते—अथ वास्तु ।

प्रारम्भे कूर्मचक्रं वृषभं चक्रं च स्तम्भयोः ।
प्रवेशे कलशं चक्रं वास्तुचक्रं च योजयेत् ।। १ ।।

COLOPHON : इति सर्वोद्धारे चक्रावलीग्रन्थ समाप्तम् ।

Post.-Colophonic : संवत् १८२३ ना शाके १६८८ मिति द्वितीय चैत्र सुदि १३ तिथि त्रयोदशी भौमवारे लिखितं मुनिराज श्री ५ हर्षचन्द्रेण । श्रीसिरपुखघाडा मध्ये ।

## 2723. चमत्कारचिन्तामणिः

OPENING : ओं नमः । श्रीगणेशाय नमः ।

विज्ञानेश्वरयोगिना भगवताऽनन्तेन भट्टेन च,
श्रीमद्भोजमहीभुजातिथिगणे यो निर्णयोङ्गीकृतः ।
सोऽयं सम्प्रति वैद्यनाथविदुषा संक्षेपतः कथ्यते,
ज्योतिर्वेदविदामतन्द्रितधियामानन्दसम्भूतये ।। १ ।।

COLOPHON : इति वैद्यनाथविरचिते चमत्कारचिन्तामणौ प्रतिपदादितिथिनिर्णयोद्देशकथनं नामाष्टमोध्यायः ।

Post-Colophonic : संवत् १५६२ वर्षे फाल्गुनशुदि १४ र······

## 2734 चमत्कारचिन्तामणिः

OPENING

क्वणत्किंकणीजालकोलाहलाढ्यं लसत्पीतवासो वासनं[वसानं] चलन्तम् ।
जसो[यशो]दागणे योगिनामप्यगम्यं भजेऽहं मुकुन्दं घनश्यामवर्णम् ।। १ ।।

CLOSING :

दधीच्ये पुरे खेटहाराण············गणाच्छ्रीहरः स्थापितस्थानरवाल(?)।
द्विजोऽचीकरत् **सुन्दरा** लब्धिजन्मा **नृपाणिणामृषि**र्नाम **चिन्तामणीयम्** ॥ ३ ॥
**चमत्कारचिन्तामणौ** यत् स्वगानं फलं कीर्त्तितं **भट्टनारायणेन**।
पठेद् यो द्विजस्तस्य रा(ज्ञः) समा[भा]यां समक्षः प्रवक्तुं न व्यसमथा(?)॥४॥

COLOPHON :

इति श्री**चमत्कारचिन्तामणौ** भावा[ध्या]य समाप्तम्।

## 2759. ज्ञानप्रदीपः

OPENING :

पण्डितोत्तमपण्डितश्रीश्रीपुण्यसागरगणिगुरुभ्यो नमः। नमो विघ्नछेदे।

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम्।
प्रसन्नवदनं ध्यायेत् सर्वविघ्नोपशान्तये ॥ १ ॥

× × ×

**ज्ञानप्रदीपकं** नाम शास्त्रं लोकोपकारकम्।
**प्रश्नादर्शं** प्रवक्ष्यामि सर्वशास्त्रानुसारतः ॥ ३ ॥

COLOPHON :

इति **ज्ञानप्रदीपं** सम्पूर्णम्।

Post.-Colophonic:

संवत् १७१६ वर्षे ज्येष्ठ वदि ''शनी लिखितं गणिरत्नसागरेण।

## 2788. ताजिकसारः

OPENING :

ओं नमो गणेशाय।

प्रायो न जातकफले चिरप्रयोज्ये मितः स्फुरति पुंसाम्।
तेनाऽत्र हायनफलं प्रकाश्यते ताजिकप्रोक्तम् ॥ १ ॥

COLOPHON :

इति **प्राग्वाटान्वयकुमारसिंहात्मजेन समरसिंहेन ताजिकसिद्धान्तात्** पृच्छोद्देशोद्धृतस्तृतीयतन्त्रः सम्पूर्णः। इति श्री**शिवकृतताजिकतन्त्रत्रयः** समाप्तः।

## 2804 ताजिकसुधानिधिः

OPENING :

श्रीगणेशाय नमः।

कमलकैरवबन्धुधरात्मभूबुधबुधार्चितपादसरोरुहः।
भृगुजभानुजभानुविरोधिनो ददतु दन्तिमुखो विमला गिरः ॥ १ ॥

× × ×

**श्रीग्रामोद्भवकश्यपा**न्वयनिधिः सामुद्रिकज्ञः सुधीः,
श्रीमान् **माधवसंज्ञको** द्विजवरो विघ्नेशसेवारतः।
**दादाभाई**ति तस्मादजनि गुणगणैः पूरितस्तत्त्ववेत्ता,
सिद्धान्तानां चकास्ता मुनिजनविदितस्तत्समः कोपि नान्यः ॥ ३ ॥

तस्माल्लब्धवरः परोपकृतये **नारायणो**ऽहं ब्रुवे ,
तार्त्तीयैक**सुधानिधि**र्गणितवित् तुष्टचै चमत्कारिकम् ।
श्रीमान् खिधिकरोमकादिरचितात् संगृह्य सारं परं ,
यस्य ज्ञानलवेन मुख्यपदवीं प्राप्नोति निःसंशयम् ।। ४ ।।

एवं भौमे सवीर्ये च शुभवर्गयुतेक्षिते ।
सदपत्योत्थसंतोषस्तस्मिन् पापार्दितेऽन्यथा ।। ३४ ।।

दलिले पुत्र सहमेवला·········

## 2811. तिथिकल्पद्रुमः (ब्रह्मपक्षीयः) सटीकः

OPENING :

श्रीगणेशाय नमः ।

गणाधीशं च देवीं च श्रीगुरोश्चरणाम्बुजम् ।
नत्वा रव्यादिकान् खेटान्, **कृष्णजित्** प्रमुखान् बुधान् ।। १ ।।

**तिथिसारिणीं** सुगमा **ब्रह्मपक्षे** करोम्यहम् ।
यस्यां तिथ्यादयः स्पष्टा भवन्ति लघुकर्मणा ।। २ ।।

अनयोः व्याख्या—अहं **त्रिविक्रम**नामा गणकः **ब्रह्मपक्षे सुगमां तिथिसारिणीं** करोमि ।

CLOSING :

अथ करणसाधनम्—

तिथेर्गतेप्यैक्यदलं तन्मानं करणं भवेत् ।
मानादून स्वभोग्ये च··················

## 2871 बृहज्जातकं सविवरणम्

W.-OPENING :

श्रीसूर्याय नमः ।

मूर्तित्वे परिकल्पितः शशभृतो वर्त्मा पुनर्जन्मना-
मात्मेत्यात्मविदां क्रतुश्च यजतां भर्त्ताऽमरज्योतिषाम् ।
लोकानां प्रलयोद्भवस्थितिविभुश्चानेकधा यः श्रुतौ
वाचं नः स दधात्वनेककिरणस्त्रैलोक्यदीपो रविः ।। १ ।।

W. & Ct. CLOSINGS : & COLOPHONS :

दिनकरगुरुमुनिचरणमणिपातकृतप्रसादमतिनैवम् ।
शास्त्रमुपसंगृहीतं नमोस्तु पूर्वप्रणेतृभ्यः ।। १० ।।

इति **वराहमिहिर**विरचिते **बृहज्जातके** शास्त्रोपसंहाराध्यायः । २६ ।

खनेत्रेषुशीतांशु १५२० शाके व्यतीते
सहो मासि धातुस्तिथौ सोमवारे ।
**महीदासविप्रो महेशानुपुयर्यां**
**बृहज्जातके टिप्पणं** संव्यधत्ते ।। १ ।।

× × ×

भट्टोत्पलकृतां टीकां विलोक्यातिप्रयत्नतः ।
मया संक्षेपतोऽलेखि सारं श्रीशाज्ञयान्वितम् ॥ ४ ॥

इति **बृहज्जातकविवरणं** समाप्तम् ।

Post-Colophonic : संवत् १८५८ अधिकज्येष्ठशुक्ल ७ बुधे लिखितं उदयराम सवाई जयपुरमध्ये आत्मपठनार्थम् ।

## 2872. बृहज्जातकं सटीकम्

OPENING : × × × × रुक्ता न च सापि दृष्टा । तदर्थमाह—परणमिति फलातिरिक्तिः अवीर्यैर्बलहीनै × × × × × इति श्रीभट्टोत्पलविरचितायां **बृहज्जातकवृत्तौ** दशान्तर्दशाध्यायोऽष्टमः ॥ ८ ॥

CLOSING : & COLOPHON : इति श्रीभट्टोत्पलविरचितायां **बृहज्जातकवृत्तौ** उपसंहाराध्यायः षड्विंशः ।२६। श्रीः

**वराहमिहिराचार्य**कृते **होरामहोदधौ** ।
अर्थिनामुत्पलश्चक्रेऽर्थाप्तये विवृतिप्लवम् ॥ १ ॥

**चिन्तामणि**रिति ख्याता **टीका** शास्त्रज्ञवल्लभा ।
सप्तसार्द्धसहस्राणि मानमस्यमनुष्टुभाम् ॥ २ ॥

× × ×

चैत्रमासस्य पञ्चम्यां सितायां गुरुवासरे ।
वस्वस्वाष्टमिते शाके ८८८ कृतेयं विवृतिर्मया ॥ ५ ॥

× × ×

यच्छीघ्रं लिखितं मया कुलिखितं हीनातिरिक्तं च यत्
त्यक्तं मूढतया च वा तदखिलं धीरैः सुचिन्त्यं सदा ।
यच्चात्र प्रतिपुस्तकाक्षरततेरस्पष्टभावात् पुनः
कार्यं तद्बहुशो विचारचतुरैरर्थं विचारस्फुटम् ॥६॥

इति श्री**बृहज्जातकटीकाप्रशस्तिः** । श्रीः । ग्रन्थप्रमिति ७७०० श्रीरस्तु ।

## 2881. भावाध्यायः

OPENING : श्रीगणेशाय नमः ।

नीचे चास्तगते शुभं न शुभदं मस्ते गृहे नोक्ष(नेक्षि)ते ,
क्रूरे चारियुते पीस्योंम्यर वलगेद् स्थे फलं नो ध्रुवम्(?) ।
स्वेस्वे चोपगते च मित्रभुवने श्रेष्ठो च मित्रे कृतेः
रष्फे रन्ध्रगते च भावनिःफलं उच्चारी नीचाननम् ॥ १ ॥

COLOPHON : इति श्री**देवेन्द्र**नामा कविकृते **भावाध्यायः** ।

Post-Colophonic : लखीतंग नाइषसा जगनाथ संवत् १८९२ ना मागसर वदी ५ वार गुरु संपूर्णं।

## 2882. भुवनदीपकम्

OPENING : श्रीजिनाय नमः

सारस्वतं नमस्कृत्य महः सर्वतमोपहम् ।
ग्रहभावप्रकाशेन ज्ञानमुन्मील्यते मया ।। १ ।।

CLOSING : ग्रहभावप्रकाशार्थं शास्त्रमेतत् प्रकाशितम् ।
जगद्भावप्रकाशाय श्रीपद्मप्रभसूरिभिः ।। ७६ ।।

COLOPHON : इति **श्रीभुवनदीपक** ज्योतिषशास्त्रसम्पूर्णमस्ति ।

Post.-Colophonic: श्रीभुजपुरमध्ये श्रीचिन्तामणजी प्रसादात् । लिखतं । मुं । कस्तूरचंद । चिरं रत्नचन्दपठनार्थम् ।

## 2898. मनोनन्दनं सटिप्पणम्

OPENING : श्रीगणेशाय नमः ।

नत्वा श्रीपतिपार्वतीपतिगुरून् ग्रन्थं **मनोनन्दनं**,
सप्ताध्यायसमन्वितं दिनपतेः सिद्धान्तसूक्तानुगम् ।
कुर्वे श्री**हरिवंश** एष विबुधाः शोध्यो भवद्भिर्धिया,
यद् यूयं हि परोपकारकृतये धात्रा स्वयं निर्मिताः ।। १ ।।

CLOSING: श्री**ढिल्लीनगरे** दिवाकरसुतापूराददूरस्थिते,
त्रैलोक्यप्रथितेऽभवद् द्विजवरो **गोडान्वये बूचनः** ।
तत्पुत्रो **हरिवंश** एनमकरोद् ग्रन्थं **मनोनन्दनं**,
ज्योतिःशास्त्रमहोत्पलाम्बरमणिर्दैवज्ञभूषाकरम् ।।६।।८१।।

इति श्रीहरिवंशकृते **मनोनन्दनाख्य** ।

Post-Colophonic : लिखितं श्रीछीतरदास । शुभमस्तु ।

## 2915 मुहूर्त्तकल्पद्रुमः

OPENING : श्रीगणेशाय नमः ।

अथ मुहूर्त्तकल्पद्रुमो लिख्यते—

अनाथबन्धुं गणनाथमन्तश्चित्ते निवेश्य क्षपितान्तरायम् ।
प्राचीनवाक्यानि विचार्य सम्यक् **मुहूर्त्तकल्पद्रुम**मारभेऽहम् ।। १ ।।

CLOSING · **कृष्णा**जिगोत्रे सुतरां पवित्रकर्मा जनि······**बूवशर्मा** ।
तत्सूनुना **विठ्ठलदीक्षितेन मुहूर्तकल्पद्रुम** एष चक्रे ।। १ ।।

नानाफलाढ्यैः कुसुमैः समेतः कल्पद्रुमः कल्पितवस्तुदायी ।
आकल्पमाकल्पविभूषितानां गेहेऽस्तु नित्यं विबुधाधिपानाम् ।। ३ ।।

COLOPHON : इति श्री **मुहूर्त्तकल्पद्रुम** सम्पूर्णं समाप्तम् ।

Post-Colophonic : संवत् १९०६ मीति माघ शुक्ल ५ भृगुवारे लिखि ब्राह्म चिमंजीपठनार्थं जोसि कालुराम गोरु लिखाई जयनग्रमध्ये ।

## 2940. मुहूर्त्तमुक्तावली सस्तबका

OPENING: श्रीशं श्रीहरशारदां गणपतिं ब्रह्मेन्द्रनाकौकशा(सा)म् ,
श्रीसूर्यप्रमुखान् ग्रहानृषिगुरून् भक्त्या नमस्कृत्य तान् ।
नानाग्रन्थसमस्तसारमखिलान्नालोक्य सम्यग्धिया
वक्ष्येऽहं शिशुबोधनाय विशदां **मूहूर्तमुक्तावलीम्** ।। १ ।।

COLOPHON इति परमहंसयोगीन्द्रपरिव्राजकाचार्यतापसशिरोमणिना कृता श्री**मूहूर्तमुक्तावली** समाप्ता ।

Post-Colophonic : सं० १८६५ शाके १७३० प्रवर्त्तमाने चैत्र शुदि ४ दक्षजापतिवारे श्रीराधणपुर मध्ये लि० मुनिना रत्नचन्द्रेणात्मीयार्थे परोपकाराय चेदं प्रतिदिनं विपुलतां यातु मे नोपहासो विधेय बुधैरक्षरावलिं संप्रेक्ष्य ।

## 2941. मुहूर्तमुक्तावली सस्तबका

OPENING: as at no. 2940

COLOPHON : इति **भास्कराचार्यं**वीरचीतं **मोहूर्तमूक्तावलिं** संपूर्णम् ।

Post-Colophonic : ल । ऋ । मोतीचंदे[ना]ऽऽत्मार्थे लखी छे गोगूंदास्थाने ।

## 2942. मुहूर्तमुक्तावली

OPENING as at no. 2940

Post.-Colophonic : लखितं श्रीपुन्यविजयगणी संवत् १८६३ वर्षे श्रीभटेवाजी प्रसादात् ।

## 2958. लघुग्रहशान्तिः

OPENING: श्रीगणेशाय नमः । श्रीअम्बिकायै नमः । उपविष्टेभ्यो ब्राह्मणेभ्यो नमः । कर्मसाक्षिणे श्रीसूर्याय नमः । श्रीभगवति-महाकालि-महालक्ष्मी-महासरस्वतिभ्यो नमः । आचमनं प्राणायामं तिलकं कुर्यात् । सुमुखश्चैकदन्तश्चेति पठनं कुर्यात् ।

COLOPHON : इति **लघूग्रहशान्तिः** सम्पूर्णम् ।

Post.-Colophonic : संवत् १८९५ वैशाक विदि ३ रविवासरे लिखितं गोर शिवलाल स्वहस्ते । पठनार्थं चीः रुगनाथस्य ।

## 2966. लघुजातकं सटीकम्

OPENING: श्रीभगवत्यै नमः । ऐं नमः । श्रीसूर्याय नमः ।

यस्योदयास्तसमये सुरमुकुटनिघृष्टचरणकमलोपि ।
कुरुतेऽञ्जलिं त्रिनेत्रः स जयति धाम्नां निधिः सूर्य ।। १ ।।

CLOSING : क्वचित् पर्यायकथनैः कर्मणा कथ्यते क्वचित् ।
**टीका महेश्वरेणेयं** जातकार्थाप्तये कृता ।। १ ।।

**सूर्यात्** प्राप्य वरं **वराहमिहिराचार्येण** येनाखिलं
ज्योतिः शास्त्रविदा विधाय सुधिया विस्तारितं भूतले ।
तत्प्रोक्ते **लघुजातके**ऽतिविषमे **शिष्यप्रिया**ख्यामिमां
स्वस्मृत्यैव **महेश्वरो** निजधिया **टीकां** चकार स्फुटाम् ।।२।

COLOPHON : इति **महेश्वर**विरचितायां **वृत्तौ** नष्टजातकाध्यायः समाप्तः ।
इति **लघुजातकटीका** समाप्ता ।

## 2989 वृत्तशतम्

OPENING : श्रीगणेशाय नमः ।

ब्रह्मेशचन्द्रेन्द्रदिवाकराग्निवस्वादिरूपाणि सुरस्य यस्य ।
नत्वाऽच्युतं तं व्यवहारसिद्धयै **महेश्वरो वृत्तशतं** करोति ।। १ ।।
संवत्सरर्त्वयनमासदिनेशपक्ष तिथ्याख्ययोगकरणाह्वयराशिभानाम् ।
लग्नादिभावनिचयस्य च लोकसिद्धाः संज्ञास्तु **वृत्तशत**नाम्नि सदाऽत्र वेद्याः ।।२।।

Post.-Colophonic : इति श्री**महेश्वराचार्य**विरचिते **वृत्तशते** देवप्रतिष्ठाप्रकरण सम्पूर्णम् ।। २४ ।।
ग्रन्थ. २६१ ।।

## 2990 वृद्धयवनजातकम्

OPENING : श्रीगणेशाय नमः

सृष्टौ विधात्रे जगतां शिवाय संहारकाले स्थितयेऽच्युताय ।
तुभ्यं नमः सर्वगताय नित्यं त्रयीमयायामलतस्कराय ।। १ ।।
यदुक्तवान् पूर्वमुनिस्तु शास्त्रं होरामयं लक्षमितं मया यत् ।
तं **मीनराजो** निपुणं स्वबुद्धया विचिन्त्यं चक्रेऽष्टसहस्रमात्रम् ।। २ ।।

CLOSING :
&
COLOPHON : इति श्री**वृद्धयवने** ग्रहस्वरूप संपूर्णम् ।
दग्धेति दीर्घमात्रेति च ८ जीववर्णेति जीववर्णेषु धा······

## 2991 वृद्धयावनः

OPENING : श्रीगणेशाय नमः ।

लग्नस्थितो वासरपः सचन्द्रः करोति मर्त्यं विकृतं कृतघ्नम् ।
मूकं जडं वा परदाररक्तं विहीनवित्तं सरुजं सदैव ।। १ ।।

COLOPHON : इति श्री**वृद्धयावने** संख्याश्रययोगाध्यायः ।।

Post-Colophonic : संवत् १७५१ वर्षे प्रथम आषाड वदि १० बुधे लिखितोऽयं ग्रन्थः ।

## 2999. शृङ्गारसुन्दरी सस्तबका

OPENING: अथ **शृङ्गारसुन्दरी**नामा जन्मपत्री ना योग लिख्यते--

ग्रहाः शत्रुगेहाऽऽश्रिताचाऽफनीचाः फलं भावजं यत् शुभं तत्फलं हि ।
परैः संगयुक्तं कलत्रं ध्रुवं वै यथा साधवो देवविप्राग्निभक्ताः ।। १ ।।

CLOSING: मूर्तौ भूमिसुतौ गुरुधनगृहे सौरी तथा चन्द्रमा,
राहुर्धर्मगृहे व्यये रविबुधौ शुक्रान्वितौ संस्थितौ ।
योगोऽयं तिलकाभिधो विजयते वृद्धिं स्वकार्यं कुले
विख्यातो गजराजराजसहितो लक्ष्मीनिवासान्वितम् ।।१४।।

इति श्री**शृङ्गारसुन्दरी** समाप्तम् ।

## 3008. सज्जनवल्लभः

OPENING: श्रीगणेशाय नमो नमः ।

अथ श्रीसज्जनवल्लभ लिख्यते । तिलाभ्यंगत्याज्यमाह—

शुक्रादित्यकुजेन्द्रमन्त्रिदिवसे षष्ठाष्टमीवैधृते,
पक्षान्ते व्यतिपातविष्टिदशमीकामद्वितीयादिने ।
द्वादश्यां रविसंक्रमे शिवमिते घस्रे तथा संध्ययो—
स्तैलाभ्यंगमुशन्ति नो सुखकरं श्राद्धाज्य(द्वे ह्य)थो पर्वणि ।।१।।

CLOSING: श्रीमान् **धात्र(तृ)पुरं** चकास्त्रि(स्ति)जगति श्री**गुर्जरे** मण्डले,
तस्मिन् **खेटक**विप्रमण्डलमणि(:) **कौण्डिन्यगोत्रो** गुणी ।
विद्वान् श्रीपतिभक्तिमान् समभवत् **गङ्गाधरो** याज्ञिके(कः)
प्रेमा(म्णा)दायि मखे रसांगदयुतां लग्नं द्विजेभ्यो वसु ।।२२।।
यद्वा दानवराभिनन्दितबुधः श्री**विश्वनाथाह्वयो**,
यं पुत्रं **कमलाभिधान**(धंप्र) सुषुवे **भानु**(त्र)तः **श्रीशिवा** ।
स श्री...... **विश्वनाथ**चरणाब्जप्राप्तविद्यानिधिः;
शास्त्रं **सज्जनवल्लभं** समतनोत् ज्योतिर्विदां तुष्टये ।।२४।।

COLOPHON: इति श्री**भानुपण्डित**विरचिते **सज्जनवल्लभे** ग्रहदशाप्रकरणं पञ्चदशमं सम्पूर्णम् ।। १५ ।। इति ग्रन्थः समाप्तमिदं । श्लोक संख्या ३७५ छे ।

Post.-Colophonic: संवत १९१३ ना शाके १७७७ ना माघ शुक्ल सप्तम्यां श्रीमन्दवासरे संपूर्णं । श्रीवांकानेर मध्ये लखो छे ग्रन्थ ।

## 3018. सिद्धान्तरहस्योदाहरणम् [ग्रहलाघवटीका]

OPENING: as at no. 2716

Post-Colophonic: संवत १८४८ शाके १७१३ प्रवर्त्तमाने ज्येष्ठमासे कृष्णपक्षे तिथौ १४ चतुर्दश्यां मंगलवासरे रामलालेनेदं लिपिकृतम् जयपुरमध्ये स्वपठनार्थम् ।

## 3109. प्रश्नरत्नं स्वोपज्ञटिप्पणीसहितम्

OPENING

श्रीगणेशाय नमः ।

तं नत्वा हरिर्योऽदाज्ज्ञानमादौ स्वयम्भवे ।
स्वकृतप्रश्नरत्नस्य **टिप्पणी** क्रियते मया ॥ १ ॥

CLOSING:

आस्ते यद् वसुधाविभूषणमणौ श्रीमद्धज्ये······
रम्यं काम्यवनं त्रयीधुतमलास्तस्मिन् वसन्ति द्विजाः ॥
श्री**कृष्णाश्रयदायचन्द्र**तनयो यो **नन्दरामा**भिध—
स्तेषां संस्कृतवान् प्रबन्धममलं सत्**प्रश्नरत्नाह्वयम्** ॥६६॥

अथ समाप्तिकालं ग्रन्थसंख्यां चाह—

सिद्धाष्टचन्द्रवर्षेऽश्वियुजः सितपक्षसप्तम्याम् ।
पूर्तिमगाद् ग्रन्थोऽयं शून्याब्धिद्विप्रमैर्वृ त्तैः ॥ ६८ ॥

अश्वियुजः आश्विनस्य शेषंस्पष्टम् ॥ ६८ ॥

ईषदीषदिह संरचितेयं **टिप्पणी** पृथुभयेन मनोज्ञा ।
तादृग्बुधजनोऽत्र दृढिमाह् गतं वदतु सर्वजनानाम् ॥ १ ॥

अत्र भावप्रधानो निर्देश इत्यस्मात् पृथुत्वभयेनेति वेद्यम् ।

सप्तद्वयष्टेन्दुवर्षस्य भाद्रशुक्लशिवातिथौ ।
टिप्पिणीयं मया क्लृप्ता संक्षिप्तार्थप्रकाशिनी ॥ २ ॥

COLOPHON:

इति श्री**स्वकृतप्रश्नरत्नस्य टिप्पणी** सम्पूर्णम् ।

## 3160. समरसारः सटीकः

OPENING:

श्रीगणेशाय नमः । श्रीगुरवे नमः ।

अभिवन्द्य **रामचन्द्रं** गुरुं तदुक्तं **स्वरग्रन्थम्** ।
**विवृणोति** यथाप्रज्ञं तदभिहितार्थानुसारेण ॥ १ ॥

CLOSING:

वंशे **वत्समुनी**श्वरस्य **शिवदासा**ख्यादुरख्यातितः
सम्राडग्निचिदाप यस्य जनकः श्री**सूर्यदासो**ऽजनि ।
यन्मातुर्यशसा दिशो दश विशालाक्ष्या वलक्षा व्यधात्,
स प्राज्य(ज्ञः) **स्वरशास्त्रसारविचितिं रामो** वसन्नैमिषे ॥८५॥

वत्समुनीश्वरस्य वंशे उत्तरप्रसिद्धेः × × × × × × विचितिं-संक्षेपं व्यकरोदित्यन्वयः ॥ ८५ ॥

COLOPHON:

इति श्री**रामचन्द्रसोमयाजि**विरचित**समरसारटीका भरतकृता** समाप्ता ।